॥ श्रीः ॥

# लौकिकन्यायसंग्रहः ।

उदासीनश्रीरघुनाथवर्मविरचितः ।

काशिकराजकीयसंस्कृतपाठशालायाम् ।
साहित्यदर्शनप्रधानाध्यापकेन महामहोपाध्याय-
श्रीगङ्गाधरशास्त्रिणा संशोधितः ।

# LAUKIKANYĀYASAṂGRAHA

BY
RAGHUNĀTHA VARMA UDĀSĪNA
EDITED BY
MAHĀMAHOPĀDHYĀYA GANGĀDHARA ŚĀSTRĪ,
PROFESSOR, SANSKRIT COLLEGE, BENARES.

काश्याम् ।
ई॰ जे॰ लाजरसकम्पन्याख्येन मुद्रयित्वा प्रकाशितः ।

सं॰ १९५८ । सन् १९०२ ईस्वी ।

॥ श्रीः ॥

# भूमिका ।

अथैष प्रकाश्यते लौकिकन्यायसंग्रहनामा निबन्धो मुद्रयित्वा । अस्य निर्माता किलोदासीनसंप्रदायस्थो रघुनाथवर्मा नाम कश्चिदभिनवो विपश्चित् । सोऽयमद्वैतमतश्रद्धालुः संगृह्य भूयसो लौकिकान् शास्त्रीयांश्च न्यायान् परस्परासंबद्धानपि तान् वेदान्तनिबन्धं प्रस्तुत्य पूर्वपक्षोत्तरपक्षोपपादकतया कृतसंगतीन् संजग्रन्थेति प्रशंसनीयमस्य तत्संगतिसंपादनकौशलम् । अयं चान्तरा प्रसङ्गमापाद्य तत्तद्देवतोत्कर्षमभ्युपयतां तदभ्युपगमप्रमाणवचनकदम्बं तन्निरासोपयिकसप्रमाणयुक्तीः काशीमुक्तिविचारं जैमिनीयनयोपयोगिश्रुत्यादिबलाबलचिन्तां तदपेक्षितविषयांश्च प्रकृतानुपयोगिनोऽपि विषयान् तथा निबबन्ध यथैतेऽसंबद्धा इति न प्रतिभासेरन् प्रमोदयेयुश्च विस्तरवीक्षणाक्षमव्युत्पित्सुजनचेतांसीति मामकीनो विश्वासः ।

पुरा किल काशीविद्यासुधानिधिनामके काशिकराजकीयसंस्कृतपाठशालास्थपण्डितोपक्रमे मासिकपुस्तके मुद्रयितुमुपक्रान्ते मदीयगुरुचरणश्रीद्धराजारामशास्त्रिश्रीद्बालशास्त्रिभ्यामनुपलब्धलौकिकन्यायविवरणक्षमप्राचीननिबन्धाभ्यामारभ्यत स्वयमेव तादृशो निबन्धो जिज्ञासुजनोपकृतये न त्वसावन्तरायबाहुल्येन समपूर्यत । तदनु तथाविधनिबन्धप्रकाशनावश्यकतां तेन विना शास्त्रेषु प्रसङ्गादापतितानां तथाविधन्यायानां विषयस्वरूपनिर्धारणस्य दुःसंपादतां च निश्चिन्वद्भिः साम्प्रतिककाशिकराजकीयपाठशाला-

प्रधानाध्यक्षैरार्थरश्रीवेनिससाहिबमहोदयैः समादिष्टो ऽहं मार्गयमाणस्तादृशं निबन्धं समासादयमस्मदाप्तमश्रीश्नेपालराजगुरुश्रीहेमराजशर्मपण्डितवरेभ्यः शुद्धप्रायमेकमेव पुस्तकम् । आलोचयन्निदं तत्र बहूनां न्यायानामसंग्रहमाकलयन्नपि मीमांसातन्त्रवार्तिकसंशोधनपाठालयपरीक्षोपयिकभागपाठनादिकार्यव्यापृततया ऽलब्धतत्पूरणावकाशः सांप्रतमियतैव निर्वाहयन्तु कार्यमुत्साहिनः सत्यवसरे ऽत्रानिबद्धान् न्यायान् क्रमेण संगृह्य विवृत्य च यथामति तत्स्वरूपविषयोपयोगान् प्रकाशयेयं समयान्तरइति मन्यमानः प्रारभे सत्वरमिदं कार्यं समापयं च । समापिते मुद्रणे द्वितीयपुस्तकदर्शनावसरोपलब्धमधिकं पाठं तत्स्थले शुद्धिपत्रे च समयोजयम् । तमिमं निबन्धमालोच्यावगच्छन्तु तत्प्रस्तुतन्यायस्वरूपं जिज्ञासवः संगृह्य चात्रानुद्दिष्टान् न्यायान् प्रबोधयन्तु मां क्षाम्यन्तु चैकमात्रपुस्तकावलम्बेनाशक्यप्रतीकाराणि स्खलितानि गुणैकपक्षपातिन इति । शुभम् ।

महामहोपाध्यायो

गङ्गाधरशास्त्री ।

॥ श्रीः ॥

# लौकिकन्यायसंग्रहस्य शुद्धिपत्रम् ।

| पृ॰ | पं॰ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ५ | अक्षैाक्य | अक्षैक्य |
| ५ | ५ | द्विरुधर्म | द्विरुद्धधर्म |
| ९ | १३ | सत्वात् | सत्त्वात् |
| १० | २० | सूक्ष | सूक्ष्मम |
| १० | २७ | ताऽनन्द | ताऽऽनन्द |
| १४ | ८ | दिनाम | दीनाम |
| १६ | १८ | पृष्य | पृश्य |
| २० | ७ | यथो | यथे |
| २० | ८ | यणा | यण |
| २२ | ९ | भूति | भूत |
| २४ | ११ | शाच्व | शाख्व |
| २७ | ११ | दीश्य | दिश्य |
| २९ | १३ | व्रीष्व | वीष्वि |
| ३२ | २ | सूचू | सूचु |
| ३३ | ४ | शपर | शम्बर |
| ३४ | १७ | विष्णू | विष्णु |
| ३५ | ६ | वाऽवि | वाऽऽवि |
| ३७ | १० | स्त्वाव | स्त्वीव |
| ३७ | २६ | तिप्रा | तिप्र |
| ३८ | १२ | कारो | कारै |
| ३८ | १७ | नाऽऽपा | नाऽपा |
| ३९ | २९ | तोऽप्या | तोऽप्य |
| ४१ | १८ | कणा | कर्णा |
| ४४ | ६ | णिकः | णिकाः |
| ४५ | १६ | पायेन | पापेन |
| ४६ | ६ | शसवर्तीः | शपवतीः |
| ४७ | ५ | यथाऽह | यथाऽऽह |
| ४८ | १२ | छतुत्वं | छेतुत्वं |
| ४८ | २५ | येद्या | येद्यो |
| ४९ | २४ | न्यस्त्कि | न्यत्किं |
| ४९ | २६ | छन्तरा | छन्ता |
| ५१ | १९ | सव | सर्वं |
| ५५ | १७ | च्छिचा | च्छिचो |
| ५६ | ११ | ह्यक्तं | ह्युक्तं |
| ५८ | २७ | च्कुऽसद्र | च्कुद्धसद्रु |
| ५९ | ६ | विषयवता | विषयत्ववता |
| ६० | १९ | नग्व | नन्व |
| ६३ | २६ | प्रद्र | प्रद्र |
| ६५ | ११ | सिद्ध | सिद्धे |
| ६६ | ३ | नाऽऽस्ति | नाऽस्ति |
| ६६ | १६ | ऽऽपि | ऽपि |
| ६६ | २६ | भय | भटा |
| ७३ | १२ | शक्वम् | गह्वम् |
| ७३ | २० | भिचक | भिचुक |
| ७४ | ८ | काङ्क्ष | काङ्क्षा |
| ७६ | २१ | मातृ | मोतृ |
| ७७ | २१ | धिकारे | धिक्कार |
| ७८ | १४ | मह | मह्ना |
| ७९ | २१ | दशमा | दर्शनमा |
| ७९ | २५ | तश | शत |
| ८२ | १७ | पूषा | पूर्षा |
| ८४ | ८ | मुक्त | मुक्ति |
| ८७ | २० | वश | वेश |
| ८८ | ६ | मूमूर्षा | मुमूर्षा |
| ९२ | २५ | सव | सर्व |
| ९३ | १९ | ष्टयं | ष्टय |

| पृ॰ | पं॰ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९५ | १० | धांहि | धोषि |
| ९९ | १२ | सेवर्गा | सोवर्णा |
| १०३ | २५ | तोपक्षारा | तोपकाराक्षा |
| १०६ | २६ | शत्वं | शक्तत्वं |
| १११ | २२ | अत्नप्र | आत्तप्त |
| ११२ | ५ | सिद्ध | सिद्धे |
| ११६ | ६ | तार्थ्यं | तार्थ्यैं |
| ११८ | ११ | शेध | शेषध |
| ११६ | २५ | निषद्ध | निषिद्ध |
| १२३ | २४ | राज | राज्य |
| १२४ | २२ | त्सेन | त्वेन |
| १२७ | ३ | कारक | कारका |
| १३७ | ९ | युक्तिभ | युक्तिभि |
| १४१ | १ | तान्यरा | तान्यरा |
| १४१ | १४ | न्याये | न्यायो |
| १४२ | ३ | ताये | तीये |
| १४२ | ४ | पतेः | पत्तेः |
| १४२ | १२ | वृति | वृत्ति |
| १४२ | १७ | वृते | वृत्ते |
| १४३ | १८ | फल | फला |
| १४६ | २० | प्वि्पि | प्वपि |
| १४८ | १८ | कारणी | कारणी |
| १५१ | २१ | स्याय | स्यीय |
| १५२ | २६ | सम्प | सम्य |
| १५४ | २६ | पटकं | पट्कं |
| १५६ | १६ | तेजः सं | तेजःसं |
| १५८ | ३ | घात | न घात |
| १५९ | ९ | पश्चि | पत्ति |
| १६० | ११ | र्यादि | यादि |
| १६२ | ६ | त्मान | त्मनि |
| १६२ | २० | सुखे | सुखो |
| १६४ | २० | सुरः | सुराः |

पृ॰ पं॰

१३३ १३ आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायोऽत्र प्रासङ्गिकः । शक्तिः पुरुषसामर्थ्यम् स्पष्टमन्यत्तत्रैव १ । ५५ एतावान् ग्रन्थोऽत्रापेक्षितः ।

॥ श्रीः ॥

# लौकिकन्यायसंग्रहधृतन्यायानां सूचीपत्त्रम् ।

श्रीगणेशाय नमः ।

# लौकिकन्यायसङ्ग्रहः ।

यत्कीर्तिप्रभया सुशुक्लभुवने मायाप्रभावैः प्रभो-
र्नीलादेर्जनिता ऽप्रतीतिरचला द्यौः संवृता शोभते ।
यच्छिष्योडुगणैः स मे गुरुरहो हार्दान्धकारापहः
श्रीमद्रामदयालुरिन्दुरमलो मोदाय भूयात्सदा ॥ १ ॥
नत्वा शंभुं हरिं गौरीं विधिं ढुण्ढिं च भारतीम् ।
क्रियते रघुनाथेन लौकिकन्यायसंग्रहः ॥ २ ॥
लौकिकन्यायरत्नानामाकरे यत्प्रदर्शितम् ।
तस्य संक्षेप एवेह शीघ्रबोधाय दर्श्यते ॥ ३ ॥
न्यायार्थं विषयं चैवोदाहृतिं च यथामति ।
वदिष्यामो ऽत्र संक्षेपाद्विस्तरादपि च क्व चित् ॥ ४ ॥
प्रसङ्गादागतानां तु न्यायानां तत्र विस्तृतेः ।
अर्थमात्रं वदिष्यामः क्व चिदन्यामुदाहृतिम् ॥ ५ ॥
प्रसङ्गादायाता अपि निगदविख्यातविषया
न ते व्याख्यास्यन्ते पुनरसकृदुक्ताश्च विरलाः ।
पुनर्व्याख्यास्यन्ते विषयकथनादिप्रविततः
पुरो ऽप्रोक्तान्कांश्चित्पुनर॥ न वदिष्यामि विषये ॥ ६ ॥
अर्थादर्थो न शब्दार्थ इत्याद्या वृद्धसूक्तयः ।
पूर्वैर्न्यायतया प्रोक्ता वदिष्यामस्ततस्तथा ॥ ७ ॥
उदाहृतिं वदिष्यामः प्रायो वेदान्तशास्त्रगाम् ।
मीमांसान्यायगां कां चित्कां चिचापरशास्त्रगाम् ॥ ८ ॥
आम्नायशिरसामस्या निबन्धत्वं न तावता ।
स्याद्वैशेष्यात्तु तद्वाद इति न्यायसमाश्रयात् ॥ ९ ॥

पञ्चीकृतस्य भूम्यादेः पृथिवीत्वादिकं यथा ।
आम्नायात्तनिबन्धत्त्वं तथा ऽस्य स्यादसंशयम् ॥ १० ॥
असाधारणधर्मस्य गन्धवत्वादिकस्य वै ।
उपलम्भात्तथात्वं चेत्तन्नैवात्रापि वारितम् ॥ ११ ॥
शास्त्रैकदेशसंबन्धं शास्त्रकार्यान्तरे स्थितम् ।
इति लक्षणसंबन्धो विद्यते ऽत्र यतो ध्रुवम् ॥ १२ ॥
उपासनाः क्रियारूपाः श्रुत्यन्तेषु तथा ऽऽकरे ।
दृश्यन्ते हि तथा ऽप्येषां वेदान्तत्त्वं यथा ध्रुवम् ॥ १३ ॥
यथा चान्यनिबन्धेषु बहुष्वप्यन्यगोचरः ।
विचारो दृश्यते तद्वद्भवत्वऽत्रापि न क्षतिः ॥ १४ ॥
ससैन्धवे ऽपि मौद्गे हि सूपे मौद्गत्ववद् ध्रुवम् ।
श्रुत्यन्तस्य निबन्धत्त्वं निबन्धस्यास्य गम्यताम् ॥ १५ ॥
तत्तदीयैरनूबन्धैरिदं स्यादनुबन्धवत् ।
तदीयाः के ऽनुबन्धाः स्युरिति चेत्त्वमवेहि तान् ॥ १६ ॥
स्यादत्रोपनिषन्नाम छन्दसां काण्ड उत्तरः ।
वेदान्तस्तदनुग्राहि सूत्रभाष्यादिकं तथा ॥ १७ ॥
अधिकारी सविषयः सम्बन्धः सप्रयोजनः ।
अनुबन्धा इति ख्याताश्चत्वारः सन्ति शास्त्रगाः ॥ १८ ॥
अधीतवेदवेदाङ्गो ह्यापातब्रह्मबोधवान् ।
बहुजन्मार्जितैः पुण्यैः सम्यगाराधितेश्वरः ॥ १९ ॥
ब्रह्म नित्यमनित्यं तु जगदेवं विवेचकः ।
ऐहिकामुष्मिकेभ्यश्च भोगेभ्यो विरतः सदा ॥ २० ॥
यत्नेन मनसो नित्यं विषयेभ्यो निवर्त्तकः ।
तेभ्यो बाह्येन्द्रियाणां च बलादाकर्षकः सदा ॥ २१ ॥
उभयेषां निवृत्तानां तथा स्थापनयत्नवान् ।
शीतोष्णसुखदुःखानां तथा मानापमानयोः ॥ २२ ॥

सहिष्णुः श्रवणादौ च सर्वदैव समाहितः ।
गुरुवेदान्तवाक्येषु केवलाद्वैतवृत्तिषु ॥ २३ ॥
दृढविश्वासवान्धीरः सत्यवादी दयान्वितः ।
अहं बद्धो विमुक्तः स्यां कथमेवं विचिन्तकः ॥ २४ ॥
वेदान्तेष्वधिकारी स्याद्वेदान्तज्ञैर्विनिश्चितः ।
तद्विषयस्तु जीवस्यात्यन्ताभेदः परात्मना ॥ २५ ॥
तत्रैव तस्य तात्पर्यं नान्यत्रैवं विनिश्चितः ।
स एव विषयस्तस्य न्यायविद्भिर्विनिश्चितः ॥ २६ ॥
यत्परः शब्द इत्यादेर्न्यायादर्थव्यवस्थितिः ।
गङ्गायां घोष इत्यादिलौकिकेष्वपि दृश्यते ॥ २७ ॥
प्रयोजनवति श्रुत्या तात्पर्यं च विनिश्चितम् ।
स्वाध्यायस्य विधेर्नूनं विरोधो ह्यन्यथा भवेत् ॥ २८ ॥
तच्च प्रयोजनं ब्रह्माद्वैतज्ञानेन सिध्यति ।
ब्रह्मविद्भवति ब्रह्मेत्यादिशास्त्रानुशासनात् ॥ २९ ॥
न भेदे तस्य तात्पर्यं सिद्धत्वादन्यमानतः ।
प्रयोजनविहीनत्वान्निन्दितत्वाच्च सर्वथा ॥ ३० ॥
मृत्योः स मृत्युमाप्नोति यो ऽत्र नानेव पश्यति ।
अल्पमप्यन्तरं कुर्वन्बिभेतीति श्रुतौ श्रुतम् ॥ ३१ ॥
प्रधानादौ न तात्पर्यं श्रुतेः किं त्वन्तरात्मनि ।
उपक्रमोपसंहारमुखैर्लिङ्गैर्विनिश्चयात् ॥ ३२ ॥
मतान्तरनिरासेन ह्येतदर्थप्रपञ्चनम् ।
भविता ऽग्रे तदेतस्य विस्तरादुपरम्यते ॥ ३३ ॥
तिपाद्यस्य चैक्यस्य जीवात्मपरमात्मनोः ।
दान्तानां च संबन्धं बोध्यबोधकतां विदुः ॥ ३४ ॥
तेषामेकत्वबोधेनोत्पाद्योत्पादकतां तथा ।
प्रयोजकप्रयोज्यत्वं संबन्धः शास्त्रमोक्षयोः ॥ ३५ ॥
हेतुमद्धेतुभावश्च संबन्धो मोक्षबोधयोः ।

संबन्धो ऽभिहितो ऽभिज्ञैरुक्तभेदैश्चतुर्विधः ॥ ३६ ॥
अद्वैतावरकस्यास्य मूलाज्ञानस्य बाधनम् ।
सविलासस्य संप्राप्तिश्चानन्दस्य प्रयोजनम् ॥ ३७ ॥
कल्पितस्य निवृत्तिश्च नाधिष्ठानातिरेकिणी ।
रज्जुसर्पनिवृत्तिर्हि न रज्जोरतिरिच्यते ॥ ३८ ॥
प्रत्यगात्मतया तस्य प्राप्तत्वे ऽपि च सर्वदा ।
कण्ठचामीकरन्यायात्तत्प्राप्तिरुपचर्यते ॥ ३९ ॥
ब्रह्मैव सन्नयं ब्रह्म प्राप्नोतीति श्रुतौ श्रुतम् ।
विमुच्यते विमुक्तश्च निवृत्तश्च निवर्त्तते ॥ ४० ॥
अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेत् ॥ ४१ ॥
इति न्यायं समाश्रित्य हुर्डुरूढहुरुक्तयः ।
यास्ताः सम्यङ्निरस्ताः स्युः श्रुतिन्यायसमाश्रयात् ॥ ४२ ॥
अनाद्यविद्यया तस्या वृत्तेः सो ऽप्राप्तवद्भवेत् ।
विद्यया तन्निवृत्तौ तु प्राप्त इत्युपचर्यते ॥ ४३ ॥
स्वाधिष्ठानातिरेकेण न सत्ता कल्पितस्य वै ।
विद्यया तन्निवृत्तिस्तूपचारादिति निश्चिनु ॥ ४४ ॥
स्वबाहौ कल्प्यमानस्य भुजङ्गस्य निवर्त्तनम् ।
न दृष्टं वस्तुनो लोके दण्डाद्यैर्बाह्यसर्पवत् ॥ ४५ ॥
अतश्च द्विविधे ऽपि स्यादैकरूप्यं प्रयोजनम् ।
आत्मरूपेण संस्थानं ततः सिद्धं प्रयोजनम् ॥ ४६ ॥
संक्षेपेणानुबन्धा हि श्रौताः प्रोक्ता यथामति ।
तदनुग्राहिसूत्रादेस्तएवैवं विनिश्चिनु ॥ ४७ ॥
तथा तस्य निबन्धानामनुबन्धास्तएव च ।
अस्याप्येतन्निबन्धत्वादनुबन्धा भवन्ति ते ॥ ४८ ॥

अत्र सर्वत्र निबन्धपदं प्रकरणपरम् । ननु किमिदं सूत्रादेः श्रुत्यनुग्राहित्वं तदर्थावबोधहेतुत्वमिति चेन्न तत एव तत्सम्भवेन तद्वैयर्थ्यात् अन्यथा विषयासिद्धेर्विचारानुपपत्तेः । स्वीकृत्येदमुक्तम् । वस्तुतस्तु वेदान्तविषय एव न सम्भवति जीवब्रह्मैक्यस्य तद्विषयत्वाद्विरुद्धधर्मकयोश्च तयोस्तदयोगादिति । उच्यते । यद्यपि वेदान्तेभ्य एव तदर्थप्रमा जायते तथा ऽपि तेषां परपरिकल्पितार्थान्तरपरत्वसंशयादसम्भावनादिपुरुषदोषप्रतिबन्धवशाच्च प्रमासामग्र्या जायमाना ऽपि सा नाविद्यानिवर्त्तनक्षमा किं तु मज्जनोन्मज्जनन्यायेनाप्रतिष्ठितेव भवति । अतस्तादृशप्रतिबन्धनिरासेन प्रमाणजन्यायाः प्रमितेः स्वविषयप्रतिष्ठत्वस्थिरीकरणाय विचारशास्त्रमारम्भणीयम् । यत्तु विरुद्धधर्माक्रान्तत्वाज्जीवब्रह्मणोरैक्यासम्भव इति तन्न । विरोधस्य भेदाधीनतया तदसिद्धावसिद्ध्या ऽद्वैतवादिनं प्रति स्वरूपासिद्धेः । अनुमानेन श्रुतिबाधायोगाच्च । किञ्च सर्वमानोपजीव्यप्रत्यक्षविरोधे ऽप्यागमस्यैव प्राबल्यमित्युत्सर्गः तथा च तत्पादोपजीविनो वराकस्यानुमानस्य का कथा । तथा च स्मृतिः प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमिति । तथा च न विषयविचारयोरसिद्धिरिति सिद्धम् । नूतनतार्किकोत्थापितकुतर्कनिराकरणेन मन्दानवगाह्यभाष्याद्युक्तितात्पर्यवर्णनेन च प्रकरणानां साफल्यम् । अस्य तु प्रकरणान्तरैस्तुल्यावान्तरविषयादिमत्त्वे ऽपि सर्वशास्त्रेतिहासपुराणसाहित्यव्याकरणकाव्यनाटकाख्यायिकादिषु वर्त्तमानदुरवगाह्यलौकिकन्यायनिचयार्थविषयाद्युद्धाटनेन सर्वोपकारित्वादवश्यारभ्यत्वम् । परमविषयादयो यद्यपि प्रकरणानां शास्त्रीया एव तथा ऽपि प्रकरणत्वादेवावान्तरविषयादयः सन्त्येव । तत्र सारं जि-

मुमुक्षुरवान्तराधिकारी । सगुणनिर्गुणरूपविषयभेदं विहाय निर्गुणमात्रमिह विषयः शास्त्रैकदेशसंबद्धमित्यंशेन संगृहीतः । तन्मात्रावधारणमतिगूढशास्त्रतात्पर्योद्घाटनं च तार्किकोद्भावितशास्त्रतात्पर्यपरिपन्थिकुतर्कनिराकरणं चावान्तरप्रयोजनं शेषेण संगृहीतम् । संबन्धस्तु विषयानुरूप इत्यलं प्रपञ्चेन ।

अथ व्याख्येयन्यायव्याख्यानमारभ्यते । तत्र तावन्न्यायसप्तके प्रायस्त्वंपदार्थशोधनम् । ततो ऽष्टमे वृक्षप्रकम्पनन्याये तत्पदार्थशोधनपुरःसरं वाक्यार्थनिरूपणं भविष्यति । स्थूणनिखननसिंहावलोकनन्यायाभ्यामुक्तार्थदार्ढ्याय तद्विरुद्धमतान्तरनिरासाय चोत्तरग्रन्थप्रवृत्तिः । यत्रापि सूक्ष्मार्थज्ञापनाय क्रमेण तत्समीपसमीपतरसमीपतमो ऽर्थस्तत्तयोच्यते तत्र स्थूलारुन्धतीन्यायो ऽवतरति । यथा ध्रुवमरुन्धतीं च दर्शयतीति विधिबलाद्वरवध्वोस्तद्दर्शने प्राप्ते ऽतिसूक्ष्मायास्तस्याः झटिति दर्शयितुमशक्यतया तावचन्द्रं तत्त्वेन वदन्ति । ततश्चन्द्रेतरास्तत्समीपस्थास्तारकाः । ततः सप्तर्षिसंज्ञकाः समीपतराः । ततः समीपतमं वसिष्ठं तत्त्वेनोक्त्वा तमेव तत्तया बोधयन्ति तथा गृहादीनात्मानमिव मन्यमानाः प्राकृता गृहे नष्टे नष्टो ऽहमिति क्रोशन्तो दृश्यन्ते । तान्वारयन्ती श्रुतिः आत्मा वै जायते पुत्र इति तावत्पुत्रमात्मत्वेन वदति । ततो ऽस्य धीः पुत्रात्मत्वे मा पर्यवस्यत्विति स वा एष पुरुषो ऽन्नरसमय इति देहमात्मानं वदति ततो देहमेवात्मानं न जानीयादिति तात्पर्यवती श्रुतिस्ते ह प्राणाः प्रजापतिं समेत्य ब्रूयुरित्यादिना श्रोत्रादीनां चेतनत्वं सूचयन्ती तदविनाभूतमात्मत्वं सूचयति । तथैव पुनरन्यो ऽन्तरात्मा प्राणमय इति प्राणात्मत्वं ब्रूते । इन्द्रिया-

त्मत्वे निरात्मत्वापत्तिः न च कस्य चिन्नाशे ऽवशिष्टस्य वृन्दस्यान्यत्वे ऽपि कस्य चित्तन्तोर्नाशे ऽप्यवशिष्टतन्तुवृन्दे स एवायं पट इति वदतिसाम्यात्प्रत्यभिज्ञा न विरुध्यते परिषद्न्यायेन च तत्कार्यनिर्वाहो ऽपीति शङ्क्यम् । उत्तर-वृन्दस्य पूर्वस्माद्भिन्नतया पूर्वेणानुभूतस्योत्तरेणास्मरणा-पत्तेः नान्यदृष्टं स्मरत्यन्य इति न्यायात् । एकस्य कस्य चिदात्मत्वं तु विनिगमनाविरहेणाशक्यं वक्तुं तेषां प्रत्येकं भोक्तृत्वे स्वातन्त्र्ये च बहूनामैकमत्यासम्भवेन विरुद्धदि-क्क्रियया बहुवृकाकृष्टमृगन्यायेन देहोन्मथनप्रसङ्गः । न च घरगोष्ठिन्यायेनैकमत्यं कदा चित्तत्सत्त्वे ऽपि सदा तद-सम्भवात् । एकस्य प्राधान्योपगमे तु तस्यैवात्मत्वं युक्तम् स्वामिभृत्यभावस्य देहभेदव्याप्तत्वात्तदैक्ये स्वामिभृत्य-न्यायस्याप्यप्रवृत्तेः तस्मादुक्ता श्रुत्या तेष्वात्मत्वधी-निरासाय प्राणस्यात्मत्वोक्तिः । प्राणे ऽपि तन्निरासाया-न्योन्तरात्मा मनोमय इति वदति । एवमन्यो ऽन्तरात्मा विज्ञानमयो ऽन्योन्तरात्मा ऽनन्दमय इत्यादावपि बो-ध्यम् । ततः पुत्राद्यानन्दमयान्तानामनात्मत्वं दर्शयन्ती श्रुतिर्निर्विशेषात्मतत्त्वमेवात्मत्वेन दर्शयति । तथा हि क-श्चिद्धीरः प्रत्यगात्मानमैक्षत् अस्थूलमनएवह्रस्वमदीर्घमच-क्षुरश्रोत्रम् अप्राणो ह्यमनाः शुभ्रः अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता न चास्ति वेत्ता मम चित्सदा ऽहं चिन्मात्रो ऽहं सदाशिवः एष ते आत्मा सर्वान्तर इत्याद्याः श्रुतयो ऽना-दिभवानुवर्त्तमानचार्वाकादिभ्रमसिद्धस्य प्रकृतन्यायेन शु-द्धाद्वैततत्त्वे मुमुक्षुधीनिवेशाय पूर्वोक्तश्रुत्याभासानूदि-तस्य पुत्राद्यात्मत्वस्य बाधपूर्वकमात्मतत्त्वं प्रतिपादयति । किं च पुत्रात्मत्वश्रुतेर्गौणत्वं स्पष्टमेव भेदप्रसिद्धेः ते ह प्राणा इत्यादिश्रुतौ प्राणादिशब्दास्तत्तद्देवतापरा इति

स्पष्टमाकरदृशाम् । अन्नमयाद्यानन्दमयान्तश्रुतेर्मुञ्जादिषीकोद्धरणन्यायेन सर्वान्तरब्रह्मपुच्छशब्दार्थसर्वबाधावधिभूतात्मतत्त्वप्रतिपत्त्युपायार्थत्वेनोपन्यस्तत्वान्न तस्याः स्वार्थपरत्वं प्रत्यगात्मत्वादिश्रुतीनां तूपक्रमादिलिङ्गैः स्वार्थपरत्वात्प्राबल्यम् । प्रयोगश्च पुत्राद्यानन्दमयान्तं जगदनात्मा दृश्यत्वाद्धटवदिति । आत्मा स्वेतरचैतन्यभास्यः पदार्थत्वादित्याद्यनुमानं त्वन्यदेव तद्विदितादित्यादिश्रुतिबाधितं ज्ञानेनैकान्तिकं च । ज्ञानमपि वेद्यं चेत्स्ववेद्यत्वे आत्माश्रयः परवेद्यत्वे ऽनवस्था । अस्तु को दोषो मूलक्षयाभावात् न यदेव न ज्ञायते तदेवासत्संपद्यते । एवं तद्वेद्यमपीति सर्वेषां गड्डलिकाप्रवाहन्यायेनाप्रामाणिकत्वप्रयुक्तासत्त्वलक्षणान्धकूपपतनं स्यात् । ततश्च कथं न मूलक्षयप्रयुक्तो जगदान्ध्यरूपदोष इत्यलम् । तस्माद्देहादीतरस्तत्साक्षी वेदान्तैः प्रकृतन्यायेन बोध्यते इति सिद्धम् । पञ्चकोशावतरणन्यायस्तु श्रुतिमात्रसिद्धत्वान्न लौकिकः एतत्तुल्यविषयप्रयोजनश्च । तथा हि ये स्थूलदेहादयः श्रुत्या ऽन्नमयादिशब्दैरुक्तास्ते कोशवत्कृमेरात्मानन्दावरकतया क्लेशहेतुत्वात्कोशा इत्युच्यन्ते । तत्र पञ्चीकृतभूतोत्पन्नः स्थूलदेहो ऽन्नमयकोशः । पञ्चीकरणं त्वचिन्त्यशक्तिरीश एकैकं भूतं द्विधा विधाय तेषु पञ्च भागान्प्रत्येकं चतुर्धा विधाय तेषां स्वस्वद्वितीयभागानन्यस्थूलभागेषु योजयति । एवं च ते प्रत्येकं पञ्चपञ्चात्मका भवन्तीति । तेषु वियदादिव्यवहारस्तु मल्लग्रामन्यायेन स्वांशाधिक्यात् । ननु पुराणोक्तं तारतम्यं दशांशैर्भूतपञ्चक इत्यार्योक्तेस्तन्मूलेतिहासादेश्च व्योमादिदशमांशसाम्यं वाय्वादेरिति गम्यते । तथा चाकाशस्यापि वाय्वादिसर्वांशापेक्षया ऽप्याधिक्यात्सर्वत्र तद्व्यवहार एव स्यादिति उच्यते ।

न्यूनाधिकभावो हि ब्रह्माण्डावेष्टनभूतेष्वेव नान्तर्गतेषु अनुपलम्भात्। यथा ऽऽहुः ब्रह्माण्डावरणेष्वेषा न्यूनाधिकविचारणेति। तानि चापञ्चीकृतान्येवेति वासिष्ठादौ प्रथितं यथा च स्वांशाधिक्यात्तत्तद्व्यवहारयोग्यानि स्युस्तथैव मेलितानि। यत्तु क चित्समं विभज्येति पाठः तत्र सममिति संपातायातम्। यद्वा समं तत्तदंशाधिक्यात्तत्तद्व्यवहारयोग्यं यथा स्यात्तथेति समर्थनीयम्। एवं हि व्योम्नि शब्दो ऽभिव्यज्यते वायौ स्पर्शोऽपि। एवमग्रे ऽपि बोध्यम्। न च सर्वत्र सर्वे कुतो नाभिव्यज्यन्ते ऽभिव्यञ्जकस्य पञ्चीकरणस्य साम्यात् तस्य प्राग्विद्यमानगुणाभिव्यञ्जकत्वाङ्गीकारात्। न चैवं सर्वत्रैकैकगुणाभिव्यक्तिरेव स्यात्। कार्ये कारणगुणानुवृत्तिस्वीकारेण व्योमादिषु क्रमेणैकद्वित्रिचतुःपञ्चगुणानां प्रागपि सत्त्वात्। त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणत्वान्न तस्याप्रामाणिकत्वम्। तेभ्यश्च स्थूलदेहाद्यो जायन्ते। ते च न हि त्रिपुत्रो द्विपुत्र इति कथ्यते इति न्यायेन पाञ्चभौतिका उच्यन्ते प्रचुरभागस्य भूतस्य प्राधान्यविवक्षायां देवदत्तापुत्रन्यायेन भौमादिव्यवहारभाजो भवन्ति। अवकाशादिरूपकार्योपलम्भाच्च कार्येण कारणसंप्रत्यय इति न्यायेनैकदेहे कारणतया पञ्चभूतसत्ता ऽवधार्या। स चैकानेकज्ञानगोचरतया वनवत्समष्टिर्वृक्षवद्व्यष्टिश्च भवति। यद्वा व्यक्तिषु जातिवत्सर्वव्यष्टिष्वनुस्यूतमण्डात्मकं समष्टिः प्रत्येकं शरीरं व्यष्टिः एतदुपहितं चैतन्यं विश्वनराभिमानित्वाद्विविधं राजमानत्वाच्च वैश्वानर इति विराडिति चोच्यते। व्यष्ट्युपहितं विश्वशरीरप्रविष्टत्वाद्विश्वः तथा हि। जीवस्य त्रय उपाधयः। सुषुप्तौ बुद्ध्यादिसंस्कारोपरञ्जितमज्ञानमात्रमुपाधिः स्वप्ने लिङ्गशरीरं तच्चाज्ञानोपरञ्जितमहमज्ञ इति प्रतीतेः। जागरे

तूभयशरीरसंसृष्टं स्थूलशरीरं पीनो ऽहं निश्छिनोम्यज्ञो ऽहमित्यनुभवात् एतदेवान्नविकारत्वादन्नमय इत्युच्यते । न च पूर्वोत्तरविरोधः पञ्चीकृताया भुव एवान्नाकारेण परिणतत्वात्तद्धेतोरेव सदस्तु किं तेनेति न्यायेन पाञ्च-भौतिकत्वानपायात् । तमःप्रधानाज्ञानोपहितचैतन्याद्व्यो-मादयो जायन्ते । तेषु च कारणगुणप्रक्रमन्यायेन सत्त्वादयो जायन्ते तत्र तद्गतरजोंऽशेभ्यो मिलितेभ्यः प्राणो जायते स चैको ऽपि स्थानभेदात्प्राणापानादिसंज्ञां लभते । ननु व्योमवद्देहे वृत्तिलाभमात्रेणावस्थितो बाह्यवायुरेवास्तु पञ्जरचालनन्यायेन वागादीनां सामान्यवृत्तिरूपा क्रिया वा ऽस्तु किं विशेषकल्पनागौरवेण धर्मिकल्पनातो धर्म-कल्पना वरीयसीति न्यायादिति चेन्न । एतस्माज्जायते प्राण इति श्रुतौ वायोरिन्द्रियाणां च प्राणात्पृथङ्निर्दे-शात् । तथा च न्यायः न वायुक्रिये पृथगुपदेशादिति । व्यस्तेभ्यस्तु क्रमेण वागादीनि जायन्ते । तत्सहितः प्राणः प्राणमयकोशो भवति । तत्सात्त्विकांशेभ्यो मिलितेभ्यो-ऽन्तःकरणं जायते तच्च मनोबुद्ध्याख्यवृत्तिभेदाद् द्विविधम् । व्यस्तेभ्यश्च तेभ्यः क्रमेण श्रोत्रादीनि जायन्ते तैः सहिते मनोबुद्धी मनोमयविज्ञानमयकोशावुच्येते । एतत्कोशत्रयं मिलितं सप्तदशावयवं सूक्ष्मशरीरमिति लिङ्गमिति चोच्यते । अत्रापि समष्टित्वव्यष्टित्वव्यवहारः पूर्ववन्मतभेदेन ज्ञेयः । तत्र समष्ट्युपहितं चैतन्यं हिरण्यगर्भ इत्युच्यते व्यष्ट्यु-पहितं तु तैजस इति । अनिर्वचनीयं ज्ञानबाध्यं भावरूपं त्रिगुणात्मकमज्ञानम् । तदेव जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतौ मायादिश-ब्देनोच्यते । तत्र शुद्धसत्त्वप्रधानं सन्मायेत्युच्यते मलिनस-त्त्वप्रधानं त्वविद्येति । सा च प्रियमोदादिसहिता ऽऽनन्द-

प्रचुरत्वादानन्दमयो बन्धहेतुत्वात्कोशः सूक्ष्मस्थूलदेहका-रणत्वात्कारणशरीरमिति चोच्यते । तदुपहिता चित्प्राज्ञ इत्युच्यते। मायोपहिता त्वीश इति। एतयोरैक्यमग्रे वक्ष्यामः । कोशानामनात्मत्वे तु पूर्वा एव युक्तयो ऽनुसन्धेयाः । संघातानात्मत्वमपीन्द्रियवृन्दानात्मत्ववन्निश्चेयमिति दिक् । इति स्थूलारुन्धतीन्यायः । अत्रादित आरभ्यैतावद्-ग्रन्थसन्दर्भे प्रसङ्गाद् ग्रन्थान्तरेष्विव ये न्यायाः पठितास्ते पाठक्रमेणैव लिख्यन्ते सङ्गतिस्तु मुख्येष्वेव यथास्वं भि-क्षुपादप्रसारणन्यायेनातिदेशसङ्गतिः । प्रासङ्गिकेष्वपि यस्यान्यस्य सङ्गतिर्भविता तस्याप्यर्थमात्रं वदिष्यामः । एवमग्रेपि बोध्यम् ।

यश्चार्थादर्थो न स चोदनार्थ इति न्या० । शबरस्वामिवचनमिदम् । अस्य यः श्रुतार्थनान्तरीयकतया लभ्यते न स वेदार्थ इत्यर्थः लोकसाधारण्याय न स शब्दार्थ इति पठ्यते ॥ १ ॥

अनन्यलभ्यः शब्दार्थ इत्यप्येतादृशः ॥ २ ॥

यत्परः शब्द इति योर्थः परः तात्पर्यविषयो यस्य स यत्परः स्पष्टमन्यत् ॥ ३ ॥

कण्ठचामीकरन्या० । यथा कण्ठगतं हेमभूषणमज्ञानादप्राप्तमिव कण्ठे तं पश्येत्युपदेशाज् ज्ञातं प्राप्तमित्युपचर्यते तथा प्रकृते ऽपीत्यर्थः ॥ ४ ॥

अर्के चेदिति न्या० । अर्के गृहकोणे । स्पष्टमन्यत् ॥ ५ ॥

मज्जनोन्मज्जनन्या० । यथा नद्यादौ पतितस्तरणानभिज्ञः कदा चिन्मज्जति कदा चिदुन्मज्जति तथेत्यर्थः ॥ ६ ॥

यदा तत्र पतितः सो ऽन्यदालम्बनमलभमानो व्याकुलचित्तः कुशकाशादीनालम्बते तदा कुशकाशावल-

म्बनन्यायः । अनेन हि दृढासु युक्तिषु निरस्तासु निर्बला युक्तीरवलम्बमानो ऽलमनेन कुशकाशावलम्बनन्यायेनेति निरस्यते ॥ ७ ॥

यथा पङ्कलिप्ता तुम्बिका नदीसमुद्रादौ मज्जन्ती पङ्कक्षये ऽवकाशे आगत्य तिष्ठति तथा जीवो देहक्षये ऽलोकाकाशे गत्वा तिष्ठति अयमेव तस्य मोक्ष इति ।

प्रासादवासिन्यायो ऽप्यवतरति । एक एव देवदत्तः कालभेदेन प्रासादोपर्यधश्च वसन्नपि प्रासादवासप्राधान्येन प्रासादवासीत्युच्यते ॥ ३१ ॥

कार्येण कारणसंप्रय इति न्यायः ॥ ३२ ॥

तद्धेतोरेव तदस्तु किं तेनेति न्या० । तस्य कपालादेर्हेतोर्मृदादेरेव तत् घटादिकारणत्वमस्तु किं तेनान्तर्गडुना कपालादिरूपकार्येणेत्यर्थः ॥ ३३ ॥

कारणगुणप्रक्रमन्या० । कारणगुणाः कार्ये स्वसजातीयगुणानारभन्ते यथा तन्तुरूपादयः पटरूपादीनिति न्यायार्थः ॥ ३४ ॥

पञ्जरचालनन्यायः यथा सयत्नैर्दशभिः पक्षिभिरेकक्रियोत्पादनेन पञ्जरचालनं क्रियते तथा दशभिरिन्द्रियैः प्राणरूपैकक्रियोत्पादनेन देहचालनं क्रियतामित्यर्थः । न वायुक्रिये इत्यधिकरणपूर्वपक्षन्यायो ऽयम् ॥ ३५ ॥

धर्मिकल्पनात इति स्पष्टः धर्मकल्पनायाः श्रेष्ठत्वं च लाघवप्रयुक्तम् ॥ ३६ ॥

सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यतइति न्याये ऽपि तथा बोध्यम् ॥ ३७ ॥

प्रकृतमनुसरामः । एतेन भिक्षुपादप्रसारणन्यायो ऽपि व्याख्यातप्रायः विषयोदाहरणसाम्यात् । अर्थसङ्गती

दिगम्बराः । इति जलतुम्बिकान्या० ॥ ८ ॥

तदेकदेशिनस्तु पञ्जरमुक्तपक्षिन्यायेन सदोर्ध्वगमनमेव तस्य मोक्षं मन्यन्ते ॥ ९ ॥

विक्षेपबहुलं धावनमेव पुरुषार्थं मन्यमाना बालैरप्युपहसनीया इत्यलम् उन्मत्तवचसि काव्यदूषणोद्भावनेनेति न्यायेन नेह निरस्यते ॥ १० ॥

जीवः स्वविद्यादिभिर्देहान्तरं निष्पाद्यैव पूर्वं त्यजतीति विवक्षायां तृणजलौकान्यायः सापि हि तृणान्तरमाश्रित्यैव पूर्वं त्यजति ॥ ११ ॥

एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकमिति न्यायेन मज्जनोन्मज्जनन्यायादन्तरा न्यायाः स्मृत्वोदाहृताः । हस्तिपकदर्शनस्य हस्तिस्मारकत्ववन्नद्यादिज्ञानस्य तत्सम्बन्धिकुशादिस्मारकत्वम् इतरन्यायद्वये ऽपि पञ्जरमुक्तेत्यस्य तथैवोदाहरणम् द्वितीयस्य त्वाक्षेपसङ्गत्योदाहृतिः ॥ १२॥

स्थूणानिखननन्यायः । स्थूणा यथा ऽसकृत्सञ्चाल्य निखनने क्रियमाणे दृढा भवति तथोत्तरग्रन्थेन प्रागुपपादितार्थदार्ढ्यं भवतीत्यर्थः ॥ १३ ॥

सिंहावलोकनन्यायः । सिंहो यथा कञ्चिन्मृगं हत्वा ऽग्रे गच्छन्नन्योपि चेत्स्यात्तमपि हन्यामिति धिया पश्चात्पश्यति हन्ति च दृष्टिपथमागतं तथा बुद्धिपथमागतस्वपक्षपरिपन्थिपरपरिकल्पितयुक्त्याभासान्तरनिरासायाप्युत्तरग्रन्थप्रवृत्तिः इत्यर्थः ॥ १४ ॥

पारिषदन्यायः । यथा पारिषदानामेकस्मिन्मृते ऽप्यवशिष्टैस्तत्कार्य्यनिर्वाहस्तथेत्यर्थः ॥ १५ ॥

नान्यदृष्टमिति ॥ १६ ॥

बहुवृकाकृष्टेति च स्पष्टौ ॥ १७ ॥

बहुराजकपुरन्यायो ऽप्येतादृशः ॥ १८ ॥

बरगोष्ठिन्या० । गोष्ठिरन्योन्यवार्त्ता वरलाभाय गोष्ठिर्वरगोष्ठिस्तया यथा वरवधूवन्धूनामैकमत्ये सति विवाहरूपमेकं कार्य्यं निष्पाद्यते तथत्यर्थः ॥ १९ ॥

स्वामिभृत्यन्यायः ॥ २० ॥

मुञ्जादिति न्यायः । मुञ्जाख्यतृणादिषीकाख्यं गर्भस्थं मृदुतृणं यथा बहिरावरकतया स्थितानां मुञ्जाख्यतृणानां विभजनेन समुद्धियये तथेत्यर्थः ।

गड्डलिकाप्रवाहन्यायः ॥ २१ ॥

गड्डलिकानामवीनां गणादेका चेत्कूपे पतिता तदा वार्य्यमाणा अपि सर्वाः तत्र पतन्तीति प्रसिद्धम् ॥ २२ ॥

एतादृश एवान्धपरम्परान्यायः सो ऽप्यूर्ध्वमुखयनवस्थास्थलएवोदाह्रियते ॥ २३ ॥

वटयक्षन्याये यदि वक्तृपरम्परोपदेशस्य मूलभूतो ऽनुभवो नास्ति तदा सो ऽप्येतादृशः सत्त्वे तु विलक्षण इति बोध्यम् ॥ २४ ॥

मल्लग्रामन्यायः । यथा ऽन्येषु सत्स्वपि मल्लानां बहुत्वान्मल्लग्राम इत्युच्यते तथेत्यर्थः ॥ २५ ॥

एतेन ब्राह्मणग्रामाम्रवनादयो ऽपि न्याया विवृताः ॥ २६ ॥ २७ ॥

न हि त्रिपुत्र इति स्पष्टार्थः ॥ २८ ॥

देवदत्तापुत्रन्यायः । न हि देवदत्ताया एव पुत्रो भवति किन्तु देवदत्तस्यापि तथाऽपि मातुः प्राधान्यविवक्षायां देवदत्तापुत्र इत्युच्यते ॥ २९ ॥

पितुः प्राधान्यविवक्षायान्तु देवदत्तपुत्रन्यायेनेत्युदाह्रियते ॥ ३० ॥

अत्रैव

तु यथा कश्चिद्भिक्षुर्यथेष्टान्नाच्छादनवासगृहादिलाभाय धनाढ्यगृहे प्रविष्टो युगपत्तल्लाभं दुर्लभं मन्वानः पूर्वमिह पादप्रसारस्तु मे भवतु पश्चात्परिचयं सम्पाद्य क्रमेण सर्वं साधयिष्यामीति धियाल्पां भिक्षां स्वीकरोति तथा मातेवातिहितैषिणी श्रुतिरद्वैततत्त्वे मुमुक्षुमतिप्रवेशमिच्छन्ती सकृत्तमशक्यं च मन्यमाना पूर्वोक्तक्रमेण संसारमुक्तये तद्बोधयतीति बोध्यम् ॥ २ ॥ ३८ ॥

सोपानारोहणन्यायो ऽपीह बोध्यः । यथा प्रासादमारुरुक्षुर्युगपदारोढुमशक्नुवन्पूर्वां कक्षां परित्यजन्नुत्तरामुत्तरां चारुहन् क्रमेण प्रासादमारोहति तथा स्वात्मभूतमपि ब्रह्माज्ञानाद्व्यवहितमिवापन्नमात्मत्वेन ज्ञातुकामः सहसा ज्ञातुमशक्नुवन्नुत्तरोत्तरात्मत्वबुद्ध्या पूर्वपूर्वात्मत्वधीबाधेन क्रमेण प्रपञ्चोपशमं शिवमद्वैतं चतुर्थमात्मत्वेन जानातीति ॥ ३ ॥ ३१ ॥

तस्माद्वा एतस्मादात्मन आकाश इत्यादावध्यारोपे यस्माद्यस्योत्पत्तिरुक्ता तदतिरेकेण तदभावो यत्र सम्भाव्यते तस्मिंस्तस्य लयो बोध्यते तत्र सोपानावरोहणन्यायप्रवृत्तिः । यथा येन क्रमेण सोपानमारोहन्ति तद्विपरीतक्रमेण ततो ऽवरोहन्ति । तथा पूर्वोक्तपञ्चकोशावतरणन्यायेन तत्त्वे बुद्धिमारोहयितुमशक्तो भोग्यभोगायतनतदाश्रयचतुर्दशभुवनतदाधारब्रह्माण्डानि पञ्चीकृतपञ्चभूतेभ्यो नातिरिच्यन्तइति सम्भावयेत् । तानि च सह सूक्ष्मशरीरैरपञ्चीकृतभूतेभ्यः । एवं गन्धतन्मात्रात्मिकां पृथ्वीं रसतन्मात्रात्मकाम्मात्रतया भावयेत् । अपश्च रूपतन्मात्रात्मकतेजोमात्रत्वेन । तच्च स्पर्शतन्मात्रात्मकवायुमात्रत्वेन । तं च शब्दतन्मात्रात्मकाकाशमात्रत्वेन तं च महे-

श्वरमात्रतया भावयेदिति एवं च यथा पूर्वोक्तक्रमेणावरोहणात्सुखेन भूमिमेति तथा तेन क्रमेण भावनात्सुखेन पुमानद्वितीयं शिवमेति । प्रलयो ऽप्यनेनैव क्रमेण बोध्यः । साक्षात्प्रकृतौ विकारलय इति न्यायात् । जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते । अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयतइति स्मृतेश्च । वार्तिककारैर्विश्वादीनामपि विलापनक्रम उक्तः । अकारं पुरुषं विश्वमुकारे प्रविलापयेत् । उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् । मकारं कारणं प्राज्ञं चिदात्मनि विलापयेदिति । अत्रापि तदतिरेकेण तदभावभावनैव विलापनम् । एवामनेनैव क्रमेण प्रलये उपाधिलयप्रयुक्तो लयो ऽपि बोध्यः । चिदात्मनो ऽपि कुत्र चिद्विलापनं लयश्च स्यादिति शङ्कां वारयति श्रुतिः । पुरुषान्न परं किं चित्सा काष्ठा सा परा गतिरिति ॥ ४ ॥ ४० ॥

साक्षात्प्रकृताविति न्यायो ऽत्र प्रासङ्गिकः । घटादेर्लयो हि कपालादावेव भवति न तु परमाणुषु तथैवानुभवादिति तदर्थः ॥ १ ॥ ४१ ॥

एतेनाध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यतइति न्यायो ऽपि व्याख्यातः आद्यन्यायत्रयेणाध्यारोपस्य चतुर्थेनापवादस्य च प्रतिपादनात् ॥ ५ ॥ ४२ ॥

रेखागवयन्यायो ऽप्येतादृशः । कीदृशो गवय इति ग्रामीणेन पृष्टो वन्यो लिखित्वा दर्शयामास । स चर्जुबुद्धित्वाद्रेखागवयमेव गवयं मेने । पश्चाद्वने गवयं दृष्ट्वा रेखायां तद्बुद्धिं तत्याजेति लौकिकी गाथा । तथैव पुरुष इत्यादिश्रुतेः पूर्वोक्ततात्पर्यानभिज्ञो ऽनात्मानमेवात्मतया जानीते ।

गुरुशास्त्रोपदेशेनात्मनि ज्ञाते तदात्मबुद्धिमपवदति ॥ ६ ॥ ४३ ॥

शाखाचन्द्रन्यायो ऽपीदृशः । यथा चन्द्रं दिदर्शयिषुराप्त आदौ दिगन्तरगतनक्षत्रादिभ्यो दृष्टिं वारयितुं शाखायां चन्द्र इत्यधिकरणत्वेन संबन्धविशेषेणादौ शाखामुपलक्षणमुपादत्ते । ततश्च दिगन्तरव्यावृत्तचक्षुषश्चन्द्रसमीपवर्तितारकादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूपं प्रकृष्टप्रकाशात्मकं बोधयति । एवं हि बोध्यधीः सुखेन चन्द्रे ऽवतारिता भवति तथा पञ्चकोशावतरणवाक्येष्वपि बोध्यम् । एवं ब्रह्मविदाप्नोति परमित्युपश्रुत्य ब्रह्मशब्दस्यानेकत्र प्रयोगदर्शनान्मुमुक्षुभिर्ज्ञेयो ब्रह्मशब्दार्थः क इति जिज्ञासोर्जगत्कारणत्वोपन्यासेन येषु जीवादिषु जगत्कारणत्वं न सम्भवति तेषां कार्योपाधितयोपाधिद्वारा स्रज्यकोटौ निविष्टत्वेन स्रष्टृत्वासम्भवात्तेभ्यो व्यावृत्तबुद्धेरपि सम्भवज्जगत्कारणभावेषु प्रधानादिषु ब्रह्मत्वभ्रममपनेतुं स्वरूपलक्षणमुपन्यस्यते । न हि जडानां तेषां ज्ञानादिरूपतोपपद्यते । ततश्चाद्यं लक्षणं केभ्यश्चिद्व्यावृत्तिनिश्चयपूर्वकबुद्धिस्थिरीकरणार्थं द्वितीयं तु सर्वभ्रमनिवृत्तिपूर्वकवस्तुस्वरूपसत्तानिश्चयार्थं त्वंपदार्थतटस्थस्वरूपलक्षणयोरपीदमेव प्रयोजनं बोध्यम् ॥ ७ ॥ ४४ ॥

तत्रैकस्य वस्तुनो मतभेदेन बहूनि रूपाणि तत्तच्छास्त्रेषु प्रतिपाद्यमानान्युपलभ्य क्रिया हि विकल्प्यते न वस्त्विति न्यायाद्वस्तुनि विकल्पासम्भवं च मत्वा विरुद्धानां समुच्चयस्याप्यसम्भवेन तेष्वेकमतप्रतिपादितं सर्वाविरुद्धं वस्तु स्वीक्रियते तत्र वृक्षप्रकम्पनन्यायः प्रवर्तते । यथा वृक्षमारूढः पुमानधःस्थितैर्नरैः पूर्वमियं शाखा प्रकम्पितव्या पूर्वमियमिति भिन्नभिन्नशाखाप्रचालने नियो-

जितः तदधःस्थेनैव च केन चित्सर्ववृक्षप्रकम्पने प्रेरितः सर्वैः पूर्वप्रचालनस्याज्ञाततया यौगपद्यासम्भवेन क्रमविकल्पोपगमे ऽपि सर्वाविरोधासिद्धेस्तच्चिकीर्षया वृक्षं प्रकम्पयति तत्प्रकम्पनेन च सर्वाः शाखा अपि प्रकम्पिताः स्युरिति भवति सर्वैरविरोधः तथा योगादारभ्य स्थावरान्तेशवादिभिरविरोधायौपनिषदाभिमतो महेशो ऽङ्गीकार्यो वीतरागैर्मुमुक्षुभिः ।

ननु के तत्तदभिमता ईशाः कश्चौपनिषदाभिमतः । कथं च तदुपगमे सर्वैरविरोध इति चेच्छृणु तावद्योगाभिमतमीश्वरं क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । सो ऽपि जीववदसङ्गश्चिद्रूपश्च परश्च जीवेभ्यस्तन्नियन्तृत्वात् । प्रधानक्षेत्रज्ञपतिर्गुणेश इति श्रुतेः । ननु नियन्तृत्वं नाम तत्तत्कर्मकारयितृत्वं तच्चासङ्गस्यानुपपन्नं यः कारयति स करोत्येवेति न्यायेन कर्तृत्वस्य दुर्निवारत्वात् । दृश्यते हि योधयितृषु नृपेषु दानादिकर्तृत्वं स्वयं योद्धृत्वं चेति । न लोहचुम्बकन्यायेनासङ्गस्यापि प्रेरकत्वोपपत्तेः । न च तन्निष्प्रमाणकम् । भीषा ऽस्माद्वातः पवतइत्यादिश्रुतिसिद्धत्वात् । बन्धमोक्षादिव्यवस्था पृथ्व्यबाद्यवस्थित्यनुपपत्तिसिद्धत्वाच्च । जीवानामपि स्वतः क्लेशादिरहितत्वे ऽपि बुद्ध्या सह विवेकाग्रहेण क्लेशादिमत्वाङ्गीकारात् । ईशस्तु सदा तैरसंस्पृष्ट इति विशेष इति । एतेन सेश्वरसांख्यवादो ऽपि व्याख्यातः । एतत्तुल्ययोगक्षेमत्वात् ।

तार्किकास्त्वसङ्गस्य नियन्तृत्वमसहमाना नित्यबुद्धीच्छाकृतिमान्पुंविशेष ईश्वरः । पुंविशेषत्वमप्यस्य बुद्ध्यादिगुणकत्वादेव नान्यथा नित्यज्ञानादिमत्त्वादनित्यज्ञानादिमज्जीवेभ्यस्तद्वैलक्षण्यमपि सिध्यति । क्षित्यादि सक-

तृकं कार्यत्वादित्यनुमानं तत्र मानम् । स च लाघवादेकः सर्वत्र कार्योपलब्धेर्विभुश्च । ज्ञानादेर्निकर्षवदुत्कर्षो ऽप्यङ्गीकार्यो बाधकाभावादिति न्यायेन भवाद्युपादानसर्वसूक्ष्मदर्शित्वात्सर्वज्ञश्च। सत्यकामः सत्यसङ्कल्पः यः सर्वज्ञः सर्वविदित्यागमो ऽपि तत्र मानमित्याहुः । यद्यप्यविद्याकामकर्माद्यभावाज्जन्यं सुखमीश्वरे न सम्भवति तथा ऽपि नित्यसुखाङ्गीकारे बाधकाभावात् । आनन्दं ब्रह्मणो विद्वानित्यादिश्रुतेश्च नित्यसुखाश्रयत्वमपीशस्यान्यत्सर्वं समानमिति तदेकदेशिनः ।

नित्यज्ञानादिमत्त्वे सदा सर्गप्रसङ्गान्नित्यजिहीर्षावत्त्वे सदा प्रलयापत्तेश्च नैतन्मतं साधु अतो लिङ्गदेहसमष्ट्युपहितो हिरण्यगर्भ ईशः न च देहयोगे जीवत्वं शङ्क्यं तत्समनियताविद्याद्यभावेन तस्यासम्भवात् । कथं तर्हि शरीरपरिग्रहः लीलयैवेति गृहाण । न च तदीश्वरत्वे मानाभावः उद्गीथब्राह्मणस्य तत्र मानत्वादिति हैरण्यगर्भाः ।

स्थूलदेहं विना सूक्ष्मस्यानुपलब्धेः स्थूलसमष्ट्युपहितो विराडेवेशः स च सर्वतोमस्तकादिमान् । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्यादिश्रुतेः । सर्वतः पाणिपादं तदित्यादिस्मृतेश्च । सदेहत्वे ऽपि जीवत्वाभावादिकं पूर्ववदिति विराडुपासकाः ।

विधिमुपासीनास्तु बहुपाणिपादत्वं नेशत्वप्रयोजकम् अन्यथा कृमिविशेषस्य सहस्रपद्यादेरपीशत्वप्रसङ्गात् तस्मात् श्रुतिस्मृत्यादिसर्ववाङ्मयशरीरया भगवत्या सरस्वत्या सदोपासितः सत्यलोकाधिपतिर्ब्रह्मैवेशः । यतो वेत्यादिसामान्यवाक्यान्यप्याग्नेयं चतुर्धा करोतीतिविशेषवाक्येन पुरोडाशचतुर्द्धाकरणवाक्यवत्प्रजापतिः प्रजा असृजतेत्यादिविशेषवाक्यात्तत्परतयैव नेयानि । स च

रुद्रस्य स्वललाटादाविष्कर्त्ता हरेरप्यसुरवधाद्यर्थमवतारेषु नियोजकः । क चित्तयोः स्तुत्यादौ प्रवृत्तिस्तु लोकसंग्रहाय सा च विधेः स्वीयैव तयोः स्वांशत्वादित्याहुः ।

श्रीविष्णुनाभ्युद्भूतपद्मोत्पन्नो हि विधिः स चैतत्क तिष्ठतीति विचारितवान् । सो ऽपश्यत्पुष्करपर्णे ऽतिष्ठत्सो ऽमन्यत अस्ति चैतद्यस्मिन्निदमस्तीति श्रुतेः । ततो यदस्याधिष्ठानं तन्मे मूलमिति तन्निश्चयार्थं चिरं भ्रमन्नपि नापश्यत् । पश्चात्समाधिना चित्ते ऽवभातमपश्यत् चिरं तत्प्रसादात्प्रजोत्पादे समर्थो बभूव तत एव च वेदान्स्मृत्वा सर्वज्ञतामापेति भागवतादिषु प्रथितम् । अतो विष्णुरेवेशः स च स्वकृतधर्ममर्यादापालनाय स्वेच्छया ऽवतरति न तु कस्य चिदाज्ञया । यथा ऽऽह यदा यदा हि धर्मस्येत्यादि । किं च महोपनिषदि । एको ह वै नारायण आसीन्न ब्रह्मा नेशान इत्यादिना ब्रह्मेशानादिसर्वव्यवच्छेदेनैकस्यैव हरेः सर्गादौ सद्भावं ततः प्रपञ्चोत्पत्तिं चाभिधायाथ पुनरेव नारायणः सो ऽन्यत्कामो मनसा ऽध्यायत । तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोपतत्ता इमा आपः । तासु तेजो हिरण्मयमण्डमभवत्तत्र ब्रह्मा चतुर्मुखो ऽजायतेत्यादिना अथ पुनरेव नारायणः सोन्यत्कामो मनसा ऽध्यायत तस्य ध्यानान्तःस्थस्य ललाटाच्त्र्यक्षः शूलपाणिः पुरुषो ऽजायतेत्यादिना च ब्रह्मरुद्रयोस्तत्सृष्टत्वोपवर्णनं दृश्यते । दृश्यते चैतदुपबृंहणं भारतादिषु तस्माद्विष्णुरेवेश इति वैष्णवाः ।

के चित्तु मूर्त्तित्रयातीतं मायाशबलं ब्रह्म नारायण इति मन्यन्ते । स एव वासुदेव इति महाविष्णुरिति चोच्यते । तेषां ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।

विभूतयो हरेरेता जगतः सृष्टिहेतवः । विष्णुर्मन्वादयः कालस्तथैवाखिलजन्तवः । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः । रुद्रः कालोन्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा प्रलयायैते जनार्दनविभूतय इत्यादिवचनान्यनुकूलानि ।

शैवास्तु ततो ह्यस्य बन्धविपर्ययौ फलमत उपपत्तेरित्यादिन्यायेन पशुस्थानीयानां जीवानां बन्धमोक्षसुखदुःखादिलक्षणं फलं यदधीनं स ईश्वरः तच्च शैवलैङ्गादिषु शिवाधीनं प्रतिपादितं तस्येश्वरत्वं ज्ञापयति । तथा हि ब्रह्माद्याः स्थावरान्तश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्त्तिनः । तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः । मलमायादिभिः पाशैः स बध्नाति पशून्पतिः । स एव मोचकस्तेषां भक्त्या सम्यगुपासितः । ब्रह्मादिस्तम्बपर्यन्तान्पशून्बद्ध्वा महेश्वरः । पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकमिति । किं च जगत्कारणतयोक्तयोर्ब्रह्मविष्ण्वोरपि यदीशानस्य कारणत्वं तदा जगत्कारणत्वे किं वक्तव्यं यथाऽऽह श्रीकृष्णो हरिवंशे । अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चातिवीर्याः । त्वत्तः सर्वे देवदेव प्रसूता एवं सर्वेशः कारणात्मा त्वमीड्य इति मन्त्रवर्णेषु भारते पुराणेषु च शिवहर्योरुपास्योपासकभावप्रतिपादकानि बहूनि वचनान्युपलभ्यन्ते तत्र कानि चिद्रत्नाकरे दर्शितानि विस्तरभिया नेह लिख्यन्ते । कौर्मे च मार्कण्डेयादीनृषीन्प्रति श्रीकृष्णः सर्गादौ महार्णवे काकतालीयन्यायेन स्वेन विधेः समागमं विवादं चोक्त्वा सामान्येन प्रागुक्तस्य शिवमाहात्म्यस्य स्थापनायोक्तवान् । एवं विवादे वितते मायया परमेष्ठिनः । प्रबोधार्थं परं लिङ्गं प्रादुर्भूतं शिवात्मकम् । कालानलसमप्रख्यं ज्वालामाला-

समाकुलम् । क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् ।
ततो मामाह भगवानधो गच्छ त्व माशु वै । अन्तमस्य
विजानीयामूर्ध्वं गच्छेयमित्यजः । तदा ऽऽशु समयं कृत्वा
गत्वा तूर्ध्वमधश्च तौ । पितामहो ऽप्यहं नान्तं ज्ञातवन्तौ
समेत्य वै । बद्धाञ्जलिपुटौ भूत्वा शंभुं तुष्टुवतुः पुनरिति
शिवश्चैताभ्यां स्तुतः स्वस्मात्तयोरुत्पत्तिमुक्त्वोवाच । प्रीतो
ऽहं युवयोः सम्यग्वरं दद्मि यथेप्सितम् । ततः प्रहृष्टमन-
सौ प्रणिपत्य महेश्वरम् । ऊचतुः प्रेक्ष्य तद्वक्त्रं नारायणा-
पितामहौ । भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वर ।
ततः स भगवानीशः संहसन्परमेश्वरः । उवाच मां महा-
देवः प्रीतः प्रीतेन चेतसा । प्रलयस्थितिसर्गाणां कर्त्ता त्वं
धरणीपते इत्यादि । अत्र प्राग्ब्रह्मविष्ण्वोरीश्वरत्वाभिमा-
नादिवादे प्रवृत्ते तद्वारणाय लिङ्गाविर्भावः । तच्छिरःपादा-
न्वेषणशक्त्यभिमाने निवृत्ते शिवाविर्भावस्तत्प्रसादाच्चैत-
योः सर्वसामर्थ्यम् । अत एतयोरैश्वर्य्यं शिवाधीनम् । शि-
वस्य स्वाधीनं प्रसादेनैव च तत्तन्माहात्म्यख्यापनाय क्व
चित्कल्पे ततस्तदंशेनाविर्भाव इत्याद्युपपादितम् । एवं शैव-
लैङ्गादिष्वपि द्रष्टव्यम् । ततश्च स्वतन्त्रैश्वर्यः शिव एवाराध्यो
मोक्षादिकामैः । न हि भिक्षुको भिक्षुकं याचितुमर्हति सत्य-
न्यस्मिन्नभिक्षुक इति न्यायात् । देवो विश्वाधिको रुद्रः
शिव एको ध्येयः शिवंकरः अन्यत्सर्वं परित्यज्येतिश्रुतेश्च ।
सर्वैरवश्याराध्यत्वं च तस्य मन्त्रो दर्शयति । अन्तरिच्छन्ति
तं जने रुद्रं परो मनीषया गृह्णन्ति जिह्वया ससमिति ।
जनेष्वन्तर्यामितया तिष्ठन्तं परः परं श्रेष्ठं ये मनीषया
सादरं ध्यायन्ति । ते ससं सस्यविकारमन्नं जिह्वया गृह्ण-
न्तीति शाब्दोऽर्थः । ये तु कुतर्कव्यसनिनस्तमन्तर्नेच्छन्ति
पुरीषमेव जिह्वया गृह्णन्तीति धन्याः खलु वने वाता

इत्यादेरिवाप्रस्तुतप्रशंसागम्ये ऽर्थे कटाक्षः। तथा ह्युपबृंहितं पराशरेण। अन्तरिच्छति यो रुद्रं सदा वन्द्यं मनीषया। गृह्णाति जिह्वया सोयं रसपूर्णामृतोदकम्। अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं भवम्। पुरीषमेव गृह्णन्ति जिह्वया ते न संशय इति। अत्राद्येन मन्त्रवाच्यो ऽर्थो दर्शितः द्वितीयेन गम्यः। स चेह स्वयंबाधितत्वात्तेषां गर्हितवृत्तित्वे पर्यवस्यति। अयमर्थो दर्शितो ऽन्यत्र। धिक्तेषां धिक्तेषां धिक्तेषां जन्म धिक्तेषाम्। येषां न वसति हृदये कुमतिपथविमोचको रुद्र इति। तस्मात्सर्ववशित्वात् सर्वाराध्यत्वात्सर्वफलप्रदत्वाच्च सर्वेशः शिव इत्याहुः। स च निमित्तं जगतामुपादानं तु तन्मायेति केचित्।

परमाणव उपादानं महेशो निमित्तमित्यपरे।

अन्ये त्वीशस्य द्वे शक्ती चिदात्मका आनन्दात्मका च तत्राद्या गौरी तद्द्विशिष्टस्य शिवस्य निमित्तत्त्वं द्वितीया विष्णुस्तद्विशिष्टस्योपादानत्वम्। तयोश्च शिवस्वरूपत्वं तच्छक्तित्वं च मायाविद्यादिशब्दवाच्या तु शक्तिरन्यैव। सा चोभयविधे ऽपि कारणत्वे सहकारिणीत्याहुः। एतन्मतमूलवचनानि तु रत्नाकरे द्रष्टव्यानि। परे त्वथर्वशिरसि पूर्वखण्डे देवा ह वै स्वर्गलोकमगमंस्ते देवा रुद्रमपृच्छन् को भवानिति पृष्टवतो देवान्प्रति सो ऽब्रवीदहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादिना एवं मां यो वेद स सर्वान्देवान्वेदेत्यन्तेन वचनेन शिवस्य सर्वात्मत्वं प्रतिपादितम्। अनन्तरं ततो देवा रुद्रं नापश्यन् ते देवा रुद्रं ध्यायन्ति ऊर्ध्वबाहवः स्तुवन्तीति देवैरुपास्यत्वं दर्शितम्। ततश्च द्वितीयखण्डे यो वै रुद्रः स भगवन्भूर्भुवस्वर्यश्च ब्रह्मा तस्मै वै नम इत्यारभ्य यश्च विष्णुर्यश्च महेश्वर इत्यादिप्रकारेण ब्रह्मविष्णुरुद्रोमेन्द्रादीनां

महाभूतादीनां च तद्विभूतित्वं पूर्वखण्डोक्तसर्वात्मवचनेन सिद्धमवयुत्यानुवादन्यायेन विशिष्य दर्शितम् । तृतीयचतुर्थयोस्तन्नामनिर्वचनमुखेन तस्य परभावः स्पष्टीकृतः । पञ्चमे तदुपासनादेव मोक्ष इत्युक्त्वा पाशुपतयोगात्मकतदुपास्तिप्रकारो दर्शितः । तदेवमादित आरभ्यान्तं विमृश्यमानमथर्वशिरोजातं मूर्त्तित्रयादतिरिक्तः परशिवः सर्वतो ज्यायस्त्वात्परेश इति स्पष्टीकरोति । कैवल्योपनिषदि च उमासहायं परमेश्वरं विभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतियोनिं समस्तसाक्षिं तमसः परस्तादित्यदिना मुमुक्षूपास्यत्वमुक्त्वा स ब्रह्मा स शिवः सेन्द्रः सो ऽक्षरः परमः स्वराट् स एव विष्णुः स प्राणः स कालो ऽग्निः स चन्द्रमाः । स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम् । ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तय इति ब्रह्मादेस्तद्विभूतित्वं दर्शितम् । न च स ब्रह्मेत्यादौ तत्पदानां सन्निहिते प्राप्यत्वेनोक्ते भूतयोनौ वृत्तेरुचितत्वाद्ब्रह्मादीनां तद्विभूतित्वमेव सिध्यति न तूपास्यविभूतित्वमिति शङ्क्यम् । भूतयोनिशब्दस्यापि यौगिकस्य सन्निहिते शिवे एव वृत्तेः तत्क्रतुन्यायात्तदुपासनात्तदाप्तेरेव युक्तत्वेन तस्य शिवान्यवृत्तित्वकल्पनाऽयोगाच्च । न च कथं ज्ञात्वा तमिति तस्य ज्ञानान्मोक्षप्रतिपादनम् । सगुणब्रह्मवादे तद्बोधादेव मोक्षस्योपपन्नत्वात् । निर्विशेषब्रह्मवादे सगुणज्ञानान्मोक्षो नोपपद्यतइति ज्ञात्वा तमित्यत्र तत्पदस्य निर्विशेषपरत्वावश्यकतया पूर्वेषामपि तत्परत्वं सिध्यतीति चेन्न । तत्तेजो ऽसृजतेत्यादौ तत्पदानां सविशेषे वृत्तावपि तत्त्वमसिवाक्यश्रुततत्पदमात्रस्यैवानुपपत्त्या निर्विशेषे लक्षणावद्यत्रानुपपत्तिस्तस्यैव ज्ञात्वा तमिति तत्पदस्य तत्र लक्षणाया न्याय्यत्वेन योज-

नप्राप्यायां कावेर्य्यां मल्लबन्धनस्यायुक्तत्वात् । तस्माद्रुपास्यपरमशिवविभूतित्वमेव ब्रह्मादेरित्याहुः । उभयोरुपबृंहणभूतानि भारतपाद्मकौर्मादित्यपराशरशैवमानवादिपुराणवायुसूतसंहितावचनानि परमशिवसंहाररुद्रयोर्नामरूपसाम्यस्य किञ्चिद्विशेषस्य च प्रतिपादकानि वचनानि च रत्नाकरे द्रष्टव्यानि ।

गाणपतास्तु तुरीयः परमशिवः श्रीगणेश एव स एव वैष्णवैर्वासुदेवाभिधो महाविष्णुरित्युच्यते । न तु शिवद्वयं विष्णुद्वयं वा ऽस्ति येनैकः शिवो विष्णुर्वा मूर्त्तित्रयमध्यगो द्वितीयस्तदतिरिक्त इत्युपगम्येत । एवं च स एव साक्षात्परं ब्रह्म ब्रह्मादीनां तु तदंशत्वेन ब्रह्मत्वं व्यपदिश्यते विष्ण्वंशानामिव विष्णुत्वं तथा च श्रुतिः । नमस्ते गणपते त्वमेव प्रत्यक्षं ब्रह्मासीत्यादि । अत्र विशेष्यसंबद्धत्वादन्ययोगव्यवच्छेदिनैवकारेण पार्थ एव धनुर्द्धर इत्यत्रत्यैवकारेण पार्थादन्यत्र धनुर्धरत्वस्येव गणपतेरन्यत्र साक्षाद्ब्रह्मत्वस्य योगो व्यवच्छिद्यते । अतः श्रेयःकामैः सर्वैरपि स एवाराध्यः । तत्पूजां विना ऽन्यपूजाया वैयर्थ्यस्मरणेन फलजनकत्वायोगात् । अवश्यापेक्षितानपेक्षितयोरपेक्षितं स्मरणीयमिति न्यायेन कृताकृतप्रसङ्गी यो विधिः स नित्य इति न्यायेन च तदाराधनस्यावश्यकत्वात् । कृते च तस्मिन्विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी परमं पदमित्यादिवचनेभ्यः सर्वष्टलाभसम्भवेनानधीते महाभाष्ये व्यर्था स्यात्पदमञ्जरी । अधीते ऽपि महाभाष्ये व्यर्था सा पदमञ्जरीति न्यायेनान्याराधने प्रयोजनाभावात् । सूर्याद्याराधनफलारोग्यादिमोक्षान्तकथनानन्तरं सर्वमिच्छेद्गणाधिपादिति स्मर-

णमप्यत्रमानं तस्मादेव ब्रह्माद्युत्पत्तिस्तत एव तेषां सृष्ट्यादिसामर्थ्यलाभश्चेत्याहुः ।

परमशिवविभूतिरूपस्यापि श्रीगणपतेस्तत्त्वेन वर्णनमुपासनार्थं वास्तवतदभेदाभिप्रायं च । सर्वत्र तत्पूजनस्य तत्तत्कर्मोपासनाङ्गत्वात् । न चैतावता तेषामननुष्ठानापत्तिः प्रयाजादिषु कृतेषु ज्योतिष्टोमादीनामप्यननुष्ठानापत्तेः । इतरोपासनादिविधायकशास्त्राप्रामाण्यापत्तेश्च । सर्वमिच्छेदित्यादि तु विनायकाराधनस्य परम्परया सर्वत्रोपयोगवर्णनपरं न त्वितरनिषेधपरम् तद्विधिविरोधात् । किं च हेरम्बोपपादकवाक्येषु परमशिवनामानि रूपाणि च न दृश्यन्ते अतो न स परमशिवः किं तु शंभुशिवशङ्करादिनामा त्रिनेत्रेन्दुशेखरादिलिङ्गो विधेरपि शास्ता हरेरपि वरप्रदस्तेन नुतश्च श्रीकालभैरव एव वेदान्तप्रतिपाद्यो मुमुक्षुभिराराध्यो मूर्त्तित्रयपरः परमशिव इति भैरवमुपासीनाः ।

श्रीमल्लारिभक्तास्तु कौर्मे ब्रह्मविष्ण्वोः स्वस्वसर्वेश्वरत्वाभिमानेन विवादे प्रवृत्ते वेदैः प्रणवेन च पृथक्पृथग्बोधितो विधिर्नावबुद्धवांश्चेत्तदा नीललोहितो रुद्रः प्रादुर्बभूव । स च तद्गर्ववचनं श्रुत्वा भैरवं प्रेरयामास तेन च तच्छिरसि छिन्ने सति सोमः परमशिवः प्रादुर्बभूव स च ब्रह्मणा बहुधा स्तुतः स्वपादयोः पतितं तमुत्थाप्य वरांश्च दत्त्वा ग्रीवाचाग्रे स्थितं रुद्रं नीललोहितमीश्वरम् । एषो ब्रह्माऽस्य जगतस्त्वमस्य प्रथमः सुतः । आत्मना रक्षणीयस्ते गुरुर्ज्येष्ठः पिता तव । अयं च भगवान्यज्ञोऽसगर्वो भवता ऽनघ । सान्त्विवतव्यो विरिञ्चस्य धारणीयं शिरस्त्वया । ब्रह्महत्याऽपनोदार्थं व्रतं लोके प्रदर्शय । चरस्व भिक्षामित्यादिना नीललोहिते व्रतमाज्ञाय च स्थानं

स्वाभाविकं दिव्यं ययौ तत् परमं पदम् । ततः स भगवानीशः कपर्दी नीललोहितः । ग्राहयामास वदनं ब्रह्मणः कालभैरवमित्युक्तम् । अत्र सदाशिवांशनीललोहितांशो भैरव इति भाति । काशीखण्डे ऽपि कौर्मोक्तरीत्यैव प्राक्तनं सर्ववृत्तान्तमुपपाद्य अथेश्वरः पद्मयोनेः श्रुत्वा गर्ववतीं गिरम् । सकोपतः समुत्पाद्य पुरुषं भैरवाकृतिम् । प्राह पङ्कजजन्मा ऽसौ शास्यस्ते कालभैरव । कालवद्राजसे साक्षात्कालराजस्ततो भवान् । विश्वं भर्त्तुं समर्थो ऽसि भरणाद्भैरवः स्मृतः । त्वत्तो भेष्यति कालो ऽपि ततस्त्वं कालभैरवः । यतः पापानि भक्तानां भक्षयिष्यसि तत्क्षणात् । पापभक्षण इत्येव तव नाम भविष्यतीत्यादिना नीललोहितात्कालभैरवोदयस्य विविधवरलाभस्य चाभिधानात्तस्य तदंशत्वमवगम्यते । महादेवांशसंभूतं भैरवं भैरवाकृतिमित्यपि तत्रैवोक्तम् । इह महादेवः परमशिवस्तदंशो नीललोहितस्ततः संभूतस्य भैरवस्य परमशिवांशांशत्वं स्पष्टं प्रतीयते । एवं पाद्मादिष्वपि द्रष्टव्यम् । तथा चांशांशिनोरभेदोपगमात्परमशिवांशनीललोहितांशत्वाद्भैरवस्य सदाशिवाद्भेदाभावात्तत्त्वेन स्तुतिर्न विरुध्यते । साक्षात्परमशिवस्तु श्रीमल्लारिरेव सद्भिः सदा ध्येयः तदुक्तम् । ध्यायेन्मल्लारिदेवं कनकगिरिनिभं म्हालसाभूषिताङ्कं श्वेताश्वं खड्गहस्तं विविधबुधजनैः सेव्यमानं कृतार्थैः । युक्ताङ्घ्रिं दैत्यमूर्ध्नि डमरुविलसितं नैशचूर्णाभिरामं नित्यं भक्तेषु तुष्टं श्वगणपरिवृतं नित्यमोङ्कारगम्यमिति । अत्रान्त्येन नित्यपदेन प्रागभावाप्रतियोगित्वविशिष्टध्वंसाप्रतियोगित्वार्थकेन तस्य न कुतश्चिदुत्पत्तिर्न वा कुत्र चिल्लय इति प्रतिपादनात् सर्वकारणत्वं सूचितम् । पूर्वं तु ध्यायेदित्यनेन योजनीयम् । तथा चोङ्कारगम्यो ब्रह्मविष्णु-

शिवात्मकः स एव परमशिवो ऽन्यत्सर्वं परित्यज्य सदा ध्येयः शिव एको ध्येयः शिवंकरः अन्यत्सर्वं परित्यज्येति श्रुतेः। अयमेव हरिहरयोः स्वविभूतित्वेन ग्रहणान्मैलार इत्युच्यते । मः शंभुरश्च विष्णुश्च ताविलायां यदा गतौ । तदा मैलापदं भातं तावारातीति विग्रहात् । मैलार इति मल्लारेर्नाम ध्येयमभूत्किलेति निरुक्तेः रलयोर्व्यत्ययेनोच्चारणान्मैराल इत्यपि व्यवह्रियते । हरिहरयोस्तद्विभूतित्वे च विधेः सुतरां तत्सिद्धम् । विस्तृतं चैतन्माहात्म्यं ब्रह्माण्डादिपुराणेषु । तस्मादयमेव विश्वेश इत्याहुः ।

श्रीस्वामिकार्त्तिकेयोपासकास्तु सर्वगतत्वाद्भक्तानां सविलासाज्ञानशोषणच्च स्कन्दपदाभिधेयः सर्वबुद्धिरूपा गुहा विद्यन्तआधारत्वेनास्येति व्युत्पन्नार्शआद्यजन्तगुहपदाभिधेयश्च सर्वान्तरात्मा सद्भजनीयानन्तकल्याणगुणो ब्रह्मादिविभूतिमान् तेषां कर्ता नेता च परमशिवः श्रीसुब्रह्मण्य एवेत्याहुः ।

एतेषु गाणपत्यादिमतेषु पुराणादिवचनानि तु लौकिकन्यायरत्नाकरे दर्शितानि । एवं ह्येकस्यैव सदाशिवस्य लीलाविग्रहेष्वेकाखण्डानन्तज्ञानानन्दघनस्वरूपेष्वप्यघटनघटनापटीयस्या तन्मायया ऽन्यदेहवद्भिन्नपरिच्छिन्नसच्छिद्रत्वादिना प्रतीयमानेषु कथं चिदुत्कर्षापकर्षकल्पकानां शैवम्मन्यानां कोलाहलो दर्शितः ।

तादृशेष्वेव वैष्णवावतारेषु कथं चिदुत्कर्षापकर्षकल्पकानां वैष्णवंमन्यानामपि कलहस्तथैव दृश्यते ।

के चिद्धि नृसिंहतापनीयानुसारेण श्रीनृसिंह एव मूर्त्तित्रयपरो वासुदेवाभिधो महाविष्णुः । अन्ये मूर्त्तित्रयान्तर्गतविष्णोरंशावतारा इति मन्यन्ते ।

अन्ये तु ब्रह्मा विष्णुश्च रुद्रश्चेत्यादिश्रीरामस्तुतिमाश्रित्य स एव तथाविधः अन्ये तदंशांशा इत्याहुः ।

श्रीकृष्णोपासकास्तु प्रकटैश्वर्यत्वात्साक्षाद्वासुदेवादिशब्दाभिधेयत्वाच्चक्रादिमत्वादन्ये ऽशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् । मत्तः परतरं नान्यदित्यादिवचनकोटिभ्यश्च कृष्ण एव तथा अन्येंऽशांशा इत्याहुः ।

एवं वामनादिष्वपि बोध्यम् । किं बहुना एकस्मिन्नपि कृष्णे गोकुलस्थो ऽन्यो द्वारकास्थो ऽन्य इति भेदमारोप्य पूर्वः पूर्णो ऽन्योंऽश इत्येके । हरिवंशे जरासन्धभयादिव पलायितः कृष्णः परशुरामेण संगतस्ततो मन्त्रं पृष्टवान् । स च तस्मै मन्त्रमुपदिश्योवाच तत्र ते कृष्ण संग्रामे सुव्यक्तं वैष्णवं वपुः । द्रक्ष्यन्ति रिपवः सर्वे सुराश्च सुरभावन । तां भजस्व गदां कृष्ण चक्रं च चिरविस्मृतमिति । अनेनेतः पूर्वं विष्णोरंश एवासीत् अनन्तरं स्वयमागत इति गम्यते । अयमर्थश्चाग्रे तत्रैव गरुडाख्याने स्पष्टीकृतः तथा च पूर्वो ऽशो ऽन्यः पूर्ण इत्यसंदिग्धमित्यन्ये ।

एवमेतादृशेष्वेव देवीविग्रहेष्वपि तन्माहात्म्यवचनान्याश्रित्य केचित्सरस्वतीम् अन्ये रमामन्यउमां सर्वोत्तमामाहुः ।

केचित्तु मार्कण्डेयान्तर्गतसप्तशतिकाप्रतिपाद्या महालक्ष्मीः सर्वोत्तमा ब्रह्मादयः भारत्यादयश्च सर्वे तद्विभूतयः । सैव सर्गादिहेतुर्बन्धमोक्षादिहेतुश्च । तया विसृज्यते विश्वं जगदेतच्चराचरम् । सैषा प्रसन्ना वरदा नृणां भवति मुक्तये । संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी । सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि । विष्णुः शरीरग्रहणमहमीशान एव च । कारितास्ते इत्यादितद्वचनात् ।

तत्रैव हंसयुक्तविमानस्थइत्यादिना वृत्रप्राणहरे चैन्द्रीत्यन्तेन सप्तमातॄणां तद्विभूतित्वं दर्शितम् । एतेषां ब्रह्मादीनां सर्वेषां तदंशत्वात्तदभिन्नत्वे ऽन्योन्यमप्यभेदः । तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायादिति वदन्ति । प्राधानिकरहस्यादिवचनावलम्ब्येतन्मतप्रपञ्चो ऽपि रत्नाकरे द्रष्टव्यः ।

एवमग्नीन्द्रादित्येश्वरवादा अपि तन्माहात्म्योपपादकश्रुतीतिहासपुराणवचनान्याश्रित्य तत्रैव प्रपञ्चिता ज्ञेयाः । तत्तद्भक्ता अपि सर्गादिहेतुत्वरूपेश्वरलक्षणं श्रुत्यादिप्रमाणं च तत्रतत्र दर्शयन्तो लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायेनेश्वरत्वं साधयन्ति । एवं हि वादिनो यद्विवाहस्तद्गीतगानमिति न्यायानुसारीणि स्वस्वेष्टदेवमाहात्म्यवाक्यानि पश्यन्तो ऽन्यानि तु पश्यन्तो ऽपि दुराग्रहपिनद्धदृष्टित्वादपश्यन्त इव तदेकवाक्यतादिकं चाजानन्तो ऽन्धगजन्यायेनान्योन्यं विवदन्ते अबुद्ध्वैव च मतान्तरं कूपमण्डूकन्यायान्निराकुर्वन्तो बुधैरुपहसनीयतां यान्ति । केचित्तु स्वस्वप्रीतिगोचरान्यक्षराक्षसभूतप्रेतपिशाचादीन्नृपनापितपुत्रन्यायेनायमेव सर्वोत्कृष्टो ऽयमेव सर्वोत्तम इति मन्यन्ते तेभ्यश्च स्वयं तत्तत्स्वाभिलषितार्थतृष्णाग्रस्तेभ्यो ऽपि स्वशिश्नमपि चुम्बन्तमिक्षुदण्डमयाचतेति न्यायेन स्वाभिलषितार्थान्याचन्ते ।

अन्ये वटाश्वत्थचैत्यचूतार्कवंशादीनि स्वस्वकुलदैवतानि मत्वा स्थावरयोनिप्राप्त्या ऽतिदुःखितेभ्यो ऽपि तेभ्यो महिषीप्रसवौन्मुख्ये महिषो मदनातुर इति न्यायेनेष्टं याचन्ते अन्धचटकन्यायेनाकस्माल्लब्धं चार्थं तद्दत्तं मन्यन्ते ।

अघटनघटनापटीयस्या माययोपहितं जगतामभिन्ननिमित्तोपादानं परब्रह्म परमेश्वरः तस्यांश इवांशैरीश्वरकोटिभिर्ब्रह्मादिभिर्जीवकोटिभिश्च सूत्रविराडग्न्यादिभिर्जगद्व्याप्तमित्यौपनिषदाः।

तथा च श्रुतिः मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदिति। एवं च जडानामप्यधिष्ठानानतिरेकात्तदीशत्ववादिभिरपि न विरोधः। सर्वे चैते सेविता ईश्वरत्वात्फलदा भवन्ति फलवैषम्यं तु पूज्यपूजादेः सात्त्विकादिवैषम्यात्। मोक्षस्तु प्रत्यगभिन्नब्रह्मसाक्षात्कारादेव। तदुक्तं वृद्धैः ईशसूत्रविराड्वेधा विष्णुरुद्रेन्द्रवह्नयः। विघ्नभैरवमैरालमारिकायक्षराक्षसाः। विप्रक्षत्रियविट्शूद्रगवाश्वमृगपक्षिणः। अश्वत्थवटचूताद्या यवव्रीहितृणादयः। जलपाषाणमृत्काष्ठवास्यकुद्दालकादयः। ईश्वराः सर्व एवैते पूजिताः फलदायिनः। यथा यथोपासते तं फलमीयुस्तथातथा। फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः। मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा। स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा। अद्वितीयब्रह्मसत्त्वे स्वप्नो ऽयमखिलं जगत्। ईशजीवादिरूपेण चेतनाचेतनात्मकमिति।

ननु प्रत्यगभिन्नमेकमेवाद्वितीयं ब्रह्मेति भवतां सिद्धान्तः। ईश्वराः सर्वे एवैत इत्युक्तया तु पुत्रलिप्सया देवं भजन्त्या भर्त्ता ऽपि नष्ट इति न्यायेन जीवेशाभेदं साधयितुं प्रवृत्तैर्भवद्भिः सर्ववादिसंमत ईशाभेदो ऽपि नाशितः स्यात्। न चैषां विकल्पेनेशत्वसम्भवः वस्तुनि तदयोगात्। नापि समुच्चयेन परेशितृत्वापत्तेः। नापि कल्पभेदेन व्यवस्थया सर्वेषामप्यैश्वर्यस्य कालतः परिच्छिन्नतया न कस्यापि सर्वेशत्वमिति दोषापातात्। तथा च वृद्धिमिष्टव-

तो मूलं विनष्टमिति न्यायापातः । अश्वत्थादीनां तु न तत्कथमपि सम्भवति । प्रत्यक्षादिविरोधात् । सर्वेषामीशाङ्गत्वाङ्गीकारे ऽपि तस्य साङ्गत्वेन घटादिवद्विनाशापत्तिः । ब्रह्मादीशत्वबोधिकानामुत्कर्षापकर्षबोधिकानां च वाचां व्यवस्थाभावादप्रामाण्यापत्तिः । गता च जीवेशकोटित्वव्यवस्था तत्प्रयुक्ता बन्धमोक्षादिव्यवस्था च तत्प्रयुक्तं श्रुत्यादिप्रामाण्यं च । तथा च चर्मतन्तौ महिषीं हन्तीति न्यायापातः । तस्मात्कथं ब्रह्मादेरीशकोटित्वम् । कथं च तेषामत्यन्ताभेदः । का च तदुत्कर्षापकर्षबोधकवचसां व्यवस्था । कथं च तत्तन्माहात्म्यवचसामेकवाक्यता । ब्रह्मादेर्जीवकोटित्वे च का तदीशत्वबोधकवाचां गतिः । कथं च जीवेशाभेदः । कथं चान्योन्यजीवैक्यं कथं च ब्रह्मणो नात्मनां भेदाभावः । कथं च तेषामन्योन्यमपि भेदाभाव इति सर्वं सम्यगुपपादनीयम् येन स्वसिद्धान्तः प्रकृतन्यायसङ्गतिश्च सिध्येत् । अन्यथा ईश्वराः सर्वएवैत इति यथाश्रुतोपगमे प्रकृतन्यायसङ्गतिसिद्धावपि मण्डूकतोलनन्यायेन स्वसिद्धान्तप्रच्यवनादि वज्रलेपायते । अस्यावयवभूतैरिति श्रुतेः सावयवत्वोपगमे चाश्वत्थादीनां जन्मनाशादिमत्त्वेनोपयन्नपयन्धर्मो विकरोति हि धर्मिणमिति न्यायाद्ब्रह्मणः कूटस्थत्वहानिरिति चेदुच्यते । एक एवाद्वितीयो नित्यशुद्धबुद्धमुक्तस्वभावः कूटस्थः परमात्मा कार्यमात्रप्रकृतित्रिगुणमायोपहितः सर्वनियन्तृत्वादन्तर्यामी कर्त्तुमकर्त्तुमन्यथा कर्त्तुं शक्तत्वादीश इत्युच्यते । यथा चैक एव क्षेत्री क्षेत्रे बीजवापं कुर्वन्वापकः सस्योपेतं तमेव क्षेत्रं जलसेकादिना पालयन्पालकः अन्ते दात्रादिना तमुपसंहरँल्लावक इत्युच्यते तथैक एवेशः स्वोपाधिमायागुणत्रयप्रयुक्तसर्गादिकर्मभेदेन ब्रह्मविष्णुरुद्रशब्दैरु-

च्यते। तत्र कारणीभूतरजोगुणग्रहणेन सर्वप्रपञ्चस्य स्रष्टा सन्स एव ब्रह्मेत्युच्यते। हिरण्यगर्भस्तु यद्यप्यपञ्चीकृतस्रष्टृत्वाभावान्न ब्रह्मा। तथापि पञ्चीकृतभूतभौतिकस्रष्टृत्वात् क्व चिद्ब्रह्मेत्युपचर्यते। स च जीव एव कल्पान्तरीयसूत्रात्माहंग्रहोपासनया तद्भावं प्राप्त इति प्रसिद्धमितिहासादिषु। अतस्तदीशत्वबोधिका वाचस्तदन्तर्यामिपराः। एवं विराड्वह्नीन्द्रसूर्यादीशत्वबोधिका अपीति बोध्यम्। तदन्तर्यामिणश्च वस्तुतस्तदभेदे ऽपि भेदव्यपदेशाच्चान्य इत्यादिसूत्रेभ्यः य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति। भीषा ऽस्माद्वातः पवत इत्यादिश्रुतिभ्यश्च व्यावहारिकभेदो ऽपि स्वीक्रियते। कारणीभूतसत्त्वगुणमादाय सर्वं चराचरं प्रपञ्चं पालयन्स विष्णुरित्युच्यते। तादृशतमोगुणमादायोपसंहरन्स एव रुद्र इति कथ्यते। एवं चैकस्यैव वस्तुनः परब्रह्मपरमशिवमहाविष्णुवासुदेवादिशब्दगोचरस्य चतुर्मुखचतुर्भुजपञ्चमुखरूपाः पुमाकाराः वाणीरमोमारूपाः स्त्र्याकारा लीलाविग्रहाः। ननु चतुर्मुखाकारो विधेश्चतुर्भुजाकारो हरेः पञ्चमुखाकारो हरस्य वाण्याकारो विधे रमाकारो हरेरुमाकारो हरस्य विग्रह इति विशिष्य वक्तव्यं गुणत्रयभेदेन तदवच्छिन्नानां भेदात्तथा च कथमेकस्येत्युक्तमिति चेच्छृणु। चतुर्भुजशरीरिणः पालकत्वप्रयोजकं विष्णुत्वमेवेति वक्तुमशक्यं दैत्यसंहारादिरूपस्य तमोऽवच्छिन्नरुद्रकार्यत्वात्। एवं पञ्चमुखाकारावच्छिन्नस्येशस्य त्रिपुरादिदैत्यसंहर्तृत्वे ऽपि न केवलरुद्ररूपत्वनिर्णयः संहारस्य देवादिपालनफलकत्वेन विष्णुकार्यत्वात्। शिव एको ध्येयः शिवंकरः प्रज्ञा च तस्मात्प्रसृता पुराणीत्यादिश्रुत्या स मोचयति सुप्रीतः मोचयामि श्वपाकं वे-

त्यादिस्मृत्या च मुक्तिज्ञानादिरूपस्य सत्त्वावच्छिन्नविष्णुकार्यस्य प्रतीतेश्च । तमूचूर्भ्रातरो रुद्रः सेवितः सात्त्विकैर्जनैः । मोचयेत्सत्त्वसंयुक्तः पूजयेशमतो हरमिति कौर्मे तु रुद्रे साक्षादेव सत्त्वयोगः प्रतिपादितः । एतेन तामसत्वेन रुद्रस्यापकर्षत्वप्रलापो मूर्खाणां निरस्तः । निरन्तरं दुःखमयसंसारपरिवृत्तिश्रान्तानां जीवानां कं चित्कालं विक्षेपविगमसमुल्लसदात्मानन्दानुभवेन विश्रान्तिं संपादयितुकामस्य तस्य संहाराय तमोग्रहणस्य दुश्चिकित्स्यव्रणपीडितानां व्रणं शिशमयिषोः शस्त्रग्रहणन्यायेन निदानज्ञस्य भिषजो रुग्णहिंसां प्रयुञ्जतः । न किं चिदपि नैर्घृण्यं घृणैवात्र प्रयोजिकेति शिवपुराणे व्याख्यातेन निरतिशयकरुणाम्बुधित्वलिङ्गात् । ब्रह्मकोटौ गुणवश्यत्वासम्भवात् निद्रालस्यादेस्तमःकार्यस्य तत्राप्रसिद्धेश्च । तमोयोगमात्रेण तत्पारवश्यस्य शङ्कितुमशक्यत्वात् । अन्यत्राप्यतिप्रसङ्गात् । उत्कर्षापकर्षभावे श्रुतिस्मृतिविगीतत्वस्य प्रतिपादयिष्यमाणत्वाच्च । सत्त्वोद्रिक्तस्ततो ब्रह्मेति विष्णुपुराणादौ ब्रह्मणो ऽपि सत्त्वगुणयोगेन विष्णुत्वं प्रतीयते । भारते चातिवृद्धानां प्रजानां विधेः कोपाग्निनोपसंहर्तृत्वस्मरणेन रुद्ररूपत्वं चावगम्यते । वासिष्ठे तु सत्त्वं देवा हरादय इति साम्येन सर्वेषां शुद्धसत्त्वप्रधानमायोपाधित्वमुक्तम् । एवं भवान्यां दैत्यादिसंहर्तृत्वे ऽपि पालनरूपविष्णुकार्यप्रतीतेः नृणां भवति मुक्तयइति मोचकत्वरूपसत्वावच्छिन्नकार्यप्रतीतेः । महिषासुरयुद्धे ऽसंख्यगणोत्पादकत्वरूपरजोवच्छिन्नकार्यप्रतीतेश्च न केवलरुद्ररूपत्वनिर्णयः । ननु मोक्षप्रदत्वादिकमिदं महालक्ष्म्या उक्तम् । सा चान्यैव समष्टिरूपेति मार्कण्डेयप्राधानिकरहस्यगततन्माहात्म्यलोचनेन बुध्यते । तथा च कथमनेन पार्वत्या

मोचकत्वाद्युक्त्या विष्णवादिरूपतोच्यतइति चेत्सत्यमेवं प्रतीयते अल्पश्रुतानां बहुश्रुतैस्तूमावतार एव सेति निर्धार्यते । तथा हि मार्कण्डेये तस्या महिषशुम्भादिहन्तृत्वं नन्दपुत्रीत्वादिकं च यदुक्तम् तत्सर्वं हरिवंशे गौर्या उक्तम् । तत्र तावत्प्रद्युम्नशम्बरयुद्धे । हतायां सर्वमायायां शम्बरो ऽचिन्तयत्पुनः । अस्ति मे कालदण्डाभो मुद्गरो हेमभूषितः। पुरा यो मम पार्वत्या दत्तः परमतुष्टया । गृहाण शम्बरेमं त्वं मुद्गरं हेमभूषितम् । मायान्तकरणं नाम सर्वासुरविनाशनम् । अनेन दानवौ रौद्रौ बलिनौ कामरूपिणौ । शुम्भश्चैव निशुम्भश्च सगणौ सूदितौ मयेति पर्वत्या एव ससैन्यशुम्भादिहन्तृत्वमुक्तम् । ततः शक्रप्रेषितनारदे मुद्गरवृत्तान्तं तदुपशान्त्यै गौर्युपासनं चोपदिश्य गते सति। दैत्येन तस्मिन्गृह्यमाणे सति तदुत्थानादृद्वादशार्कोत्थानादीन् नानोत्पातान् दृष्ट्वा प्रद्युम्नः शंभुप्रियां हृदि स्मृत्वा भूमौ शिरसा प्रणम्य तुष्टाव । ओं नमः कात्यायन्यै गुहस्य जनन्यै नमः । नमस्त्रैलोक्यमायायै कात्यायन्यै नमो नमः । नमस्ये शुम्भमथनीं निशुम्भहृद्दिदारिणीम् । विन्ध्यवासिनीं दुर्गघ्नां रणदुर्गां रणप्रियाम् । त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम् । सिंहवाहां नमस्यामीत्यादिना मध्यमोत्तमचरितोक्तं सर्वं गुहमातृविषयमुपपादितम् । प्रथमचरितदेवता तु योगनिद्रारूपा तामसी शक्तिः सा च रुद्रान्तर्भूतैवेति न विवादः । तथा च कथं दुर्गा मान्येति वाच्यम् । यद्यपि तत्र शुम्भनिशुम्भयोः शूलखड्गाभ्यां हननमत्र तु मुद्गरेणेति विरोधः । तथा ऽपि स कालभेदेनाऽपास्तुं शक्यः । वैवस्वते ऽन्तर इत्यादिभगवत्युक्ते हरिवंशएवानिरुद्धविष्णुकृते भीष्मपर्वणि पार्थकृते च स्तवे पुराणान्तरगतोमामाहात्म्यवचनेष्वप्ययमर्थः स्पष्टः । ग्रन्थ-

विस्तरभयान्नेह वचनानि लिख्यन्ते । यानि तुमादेर्महालक्ष्मीविभूतित्ववचांसि तानि विष्ण्वादेर्नृसिंहादिविभूतित्वबोधकवचांसीवोपासनार्थं स्तुतिरूपाणि। वस्तुतस्तु गौरीत्वमेवेत्यादीनि साक्षादभेदपराण्येव। अन्यथा त्वमक्षरं ब्रह्मेत्यादेरपि तादृशवाक्यगणे पठितस्य तथात्वप्रसङ्गेनाक्षरस्य परब्रह्मणो ऽपि स्तुत्यश्रीरामादिविभूतित्वप्रसङ्गः । अवतारावतारिणोश्चात्यन्ताभेदमनुपदमेव वक्ष्याम इत्युपरम्यते ।

न मे नारायणाद्भेदो विद्यते हि विचारतः । तन्मयोहं पर ब्रह्म स विष्णुः परमेश्वर इति कौर्मे शिवस्यैव विष्णुरूपत्वं स्वस्योक्तं सदाशिवाङ्कमारूढा शक्तिरिच्छाह्वया शिवा । महालक्ष्मीरिति ख्यातेति शैवे साक्षान्महालक्ष्मीरूपतोमाया उक्ता लक्ष्मीतन्त्रे लक्ष्म्याः काल्यादेः स्वावतारत्वोक्तिरपि स्वोमयोरभेदपरैव । हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनावित्यादिप्राधानिकरहस्ये रमाया रजोवच्छिन्नब्रह्मरूपत्वं प्रतीयते । अतो ऽस्या न केवलविष्णुरूपत्वनिश्चयः । न चैतेनास्याः केवलं विधिरूपत्वमस्तु कौर्मे इयं सा परमा शक्तिर्मन्मया ब्रह्मरूपिणीति विष्णूक्त्या विष्णुपुराणादिवचनैश्चास्या विष्णुरूपत्वस्यापि प्रतीतेः। एवं मोक्षदे मुक्तिमार्गे इत्यादौ सरस्वत्या मोक्षादिरूपसत्त्वावच्छिन्नकार्यप्रतीतेः सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधाविति प्राधानिकरहस्ये श्वेतरूपत्वात्साक्षात्सत्त्वयोगोक्तेश्च न केवलब्रह्मरूपत्वनिर्णयः । एतच्च शिवे ऽपि तुल्यम् । तस्मात्सर्वे देहाः सर्वेषामिति सिद्धम् । तथा चैकरूपत्वमेव सर्वेषां पर्यवसन्नं तदुक्तं हरिवंशे । यो विष्णुः स तु वै रुद्रो यो रुद्रः स पितामहः। एकमूर्त्तिस्त्रयो देवा रुद्रविष्णुपितामहाः। वरदा लोककर्त्तारो लोकनाथाः

स्वयंभुवः। अर्द्धनारीश्वरास्ते तु व्रतं तीव्रं समास्थिता इत्यादि। एतेन रुद्रो नारायणश्चैवेत्येकं सत्त्वं द्विधा कृतमित्यादि भारतादिवचनमाश्रित्य शिवविष्णू एव सत्त्वावच्छिन्नेशरूपौ ब्रह्मा तु जीव एवेशाविष्टः स्रष्टा भवतीति ब्रुवाणा निरस्ताः। यस्तु हरादिषु क्व चित्कस्माचित्कस्य चित्कदा चित्केन चिन्निमित्तेन लीलया वाऽविर्भाव उच्यते सोऽपि विचार्यमाण ऐक्यएव पर्यवस्यति। तथा हि क्व चिद्विधेरुभयोराविर्भाव उच्यते यथा यजुर्भ्यौंथ विष्णुमित्यादिश्रुतावष्टमूर्त्तिब्रह्मणे चान्यत्रापि च पुराणादिषु क्व चित् क्व चिद्धरात्। तथा च श्रुतिः। अण्डं हिरण्मयं रुद्रस्य वीर्यात्प्रथमं संबभूव तत्र ब्रह्मा विष्णुर्जात इत्यादि। हरिवंशे च हरं प्रति हरिवचनम्। अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चातिवीर्याः। त्वत्तः सर्वे देवदेव प्रसूता एवं सर्वेशः कारणात्मा त्वमीड्य इति। क्व चिद्धरेः यथा नारायणाद्ब्रह्मा जायते नारायणादिन्द्रो जायते नारायणाद् द्वादशादित्यारुद्राः सर्वा देवता इत्यादिश्रुतौ यथा च त्वद्विस्तारो यतो ब्रह्मा अहं भूतपतिस्तथेति भारते। एवमन्यान्यपि शैववैष्णवादिमतेषूदाहृतानीदृशानि वचांसि स्मर्त्तव्यानि। एतानि कल्पभेदेन व्यवस्थितानि। एतद्व्यतिविस्तरेण श्रीवसिष्ठो वासिष्ठे श्रीरामं प्रति कथयामास। तत्रैवेशश्चाह वसिष्ठं प्रति। एवं सर्गे हि कस्मिंश्चित् प्रथमोऽथ सदाशिवः। कस्मिंश्चिद्विष्णुरित्युक्तो नाभ्युत्पन्नपितामहः। पितामहश्च कस्मिंश्चित् कस्मिंश्चिदपि चेतरइति इतरः दुर्गाभैरवविनायकादिः। तेषामपि तत्तन्माहात्म्यबोधकपुराणादिभागेषु ब्रह्माद्युद्भवहेतुत्वसिद्धेः। भगवान्वायुश्चाह। ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत्। कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू

जगन्मयः । विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः । नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनः शिवः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायन्ते परस्परजयैषिणः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । प्रभावः कथ्यते तेषां परस्परसमुद्भवादिति । कौर्मे च । क्व चिद्रुद्रः क्व चिद्विष्णुः क्व चिद्ब्रह्मा प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा कथं च न । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यतीत्युक्तम् । मार्कण्डेये ऽपि विष्णुः शरीरग्रहणमित्यादिना दुर्गाया विष्ण्वाद्युदयमुक्त्वा यस्तद्देहेभ्यो ऽस्या आविर्भाव उक्तः सो ऽपि कालभेदेन व्यवस्थितः । एवं गणेशपुराणादौ यो विनायकादेर्ब्रह्माद्याविर्भावो ऽभिहितः सो ऽपि कदा चिन्महेश्वरस्य तदात्मनैवाविर्भावस्ततो ब्रह्माद्याविर्भाव इति समाधातुं शक्य इति न कुत्रापि विरोधः । ईदृशैरपि वाक्यैः सर्वेषां सर्वदेहेषु सत्त्वैवावगम्यते । न हि यद्यत्र नास्ति तत्तत उदेति सिकतादेस्तैलोदयापत्तेः । तस्मादेकमेवाद्वितीयं ब्रह्माघटनघटनापटीयस्या मायया ऽनेकमिव सदेहमिव परस्परस्माज्जातमिव च प्रतीयते इति सिद्धम् । एतेन कतिपयवाक्यान्याश्रित्य कस्य चिदुत्कर्षसमर्थनं निरस्तम् । यच्च हरो हरिं प्रत्याह । अहं त्वं सर्वगो देवस्त्वमेवाहं जनार्दन । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते । नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणेति तस्याप्यत्यन्ताभेद एव सामञ्जस्यम् । अन्यथा त्वदुक्तरीत्या गुणभेदात्सदवच्छिन्नभेदे विष्णुशिवादिपदानां शिवविष्ण्वादिनामत्वासम्भवेनासामञ्जस्यं स्यात् ।

यत्तु शैवैरुक्तम् । शुद्धसत्त्वप्रधानत्रिगुणमायोपहित-

एकैकगुणावच्छिन्नमूर्त्तिभ्यः परस्तुर्यश्चन्द्रावतंसनीलकण्ठोमासहायश्च शुद्धसत्त्वमूर्त्युपलक्षितः परमशिव एव मुमुक्षूपास्याः । तदुपास्तेर्मोक्षे ऽन्तरङ्गत्वात् । उमासहायमित्यादिश्रुतेः । ब्रह्मादिस्तद्विभूतिः । स ब्रह्मा स शिव इत्यादिश्रुतेः । यस्याज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः । संहर्त्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने इत्यादिपुराणादिभ्यश्चेत्यादि । यच्च वैष्णवा आहुः । तादृशमायोपाधिमूर्त्तित्रयपरो वासुदेवमहाविष्णवाख्यः परेशः ब्रह्मादिस्तद्विभूतिः । स ब्रह्मा स शिव इत्यादिश्रुतेः तद्भक्तिर्मोक्षेऽन्तरङ्गसाधनं शिवादेस्त्वौषध्यवधानेन आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् । ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनादिति पुराणात् । मां च यो ऽव्यभिचारेणेत्यादितदुक्तेश्चेत्यादि । तदप्येतेनापास्तम् । सर्वेषां शुद्धसत्त्वप्रधानत्रिगुणमायोपाधित्वसाधनेनात्यन्ताभेदसाधनात् । किञ्च मैत्रेयोपनिषदि मायिब्रह्म प्रस्तुत्य तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति परविग्रहेषु विग्रहत्रयस्यैवाग्र्यत्वं श्रूयते । यदि ततो ऽप्यग्र्या काचित्परमूर्त्तिः स्यात्तदा कथं तेषामग्र्यत्वं स्यात् अग्रेभवा ह्यग्र्या उच्यन्ते । अतः सर्वं विशेषणं सावधारणमिति न्यायाद्ब्रह्मादेर्न कुतश्चित्पाश्चात्त्यत्वम् । अनेन त्रयाणामपि महाकल्पादौ स्वत एवाविर्भावः । परस्परस्मादुदयस्त्ववान्तरकल्पेषु कदा चिल्लीलया कुतश्चिन्निमित्ताद्वा भवतीति । अमुमेवार्थमुपोद्बलयति भागवते । तत्र ह्यत्रेस्तपश्चर्य्यां प्रस्तुत्य शरणं तं प्रपद्ये ऽहं स एव जगदीश्वरः । प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्निति तस्य फलेच्छां चोक्त्वा ऽथ चिराद्वरदानाय ब्रह्मादित्रयसन्निधाने सति स्तुतिप्रणाद्यनन्तरं तान्प्रत्यत्रेरेको मया हि भगवान्त्रिविधप्रधा-

नैश्चिन्तीकृतः प्रपन्ननाय कथं नु यूयम् । अत्रागतास्तनुभृतां मनसो ऽपि दूरा ब्रूत प्रसीदत महानिह विस्मयो मइति प्रश्ने । यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा । सत्संकल्पस्य ते ब्रह्मन्यद्वै ध्यायसि तद्वयमिति तेषामुत्तरोपन्यासेन मूर्त्तित्रयातिरेकेण परस्य सर्वैश्वर्याभिव्यक्तिस्थानं तुर्यं मूर्त्त्यन्तरं नास्तीति व्यक्तीकृतम् । तत्सत्त्वे तेनैवाविर्भावापत्तेः । अन्यथा ऋषेः सत्संकल्पत्वविरोधात् । तस्मान्नैतदतिरिक्ततुरीयोपगमो युक्तः । एतेषां सर्वपरत्वबोधकासंख्यवाक्यविरोधाच्च शिवादेरेकैकस्यापि लीलाविग्रहा बहव इति पुराणादिषु प्रसिद्धम् । न च तेषु यद्यप्युत्कर्षापकर्षवार्ता ऽप्यस्ति एकस्यैव शुद्धसत्त्वप्रधानमायोपहितस्य परब्रह्मणस्तत्तदाकारैर्विवर्त्तमानत्वात् तथा ऽप्युपासकप्रेमास्पदे क्वचिद्विग्रहे तत्प्रेमाधिक्यायोत्कर्षं प्रकल्प्यायं सर्वपरस्तुरीयो ऽन्य एतद्विभूतय इति शास्त्रेणोच्यते तथा च न परशिवादिबोधकवाक्यविरोधः । सर्वोपासनायाश्च तौल्येनैव ज्ञानद्वारा मोक्षसाधनत्वं न तु साक्षात् । तमेव विदित्वेत्यादिशास्त्रविरोधात् । एतेनान्तरङ्गत्वादिकल्पना ऽऽपास्ता । सर्वात्यन्ताभेदसाधनादपि सा न युक्ता । यानि च ध्यायन्मुनिर्गच्छति मां च यो ऽव्यभिचारेणेत्यादीनि हराच्युतादिभक्त्या मुक्तिबोधकानि तान्यपि वाक्यान्तरविरोधाद्वृद्धकुमारीवाक्यन्यायेन भक्तेः परम्परया मोक्षहेतुत्वपराणीति बोध्यम् । न च ज्ञानं महेश्वरादित्यत्रापि फलभेदो ऽस्ति । विदित्वा ऽति मृत्युमेतीत्यादिश्रुतेः ज्ञानं लब्ध्वेत्यादिस्मृतेर्देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यतइति भगवत्पादवचनाच्च सति ज्ञाने मोक्षे विलम्बाभावात् । श्रेयांसि तत्र खलु सत्त्वतनोरित्यपि न विरुद्धं नृणां सत्त्वतनोरि-

त्यप्यन्वयसम्भवात् सर्वेषां सत्त्वतनुत्वसाधनाच्च। तस्मान्न किमपि वाक्यं भेदपरं प्रयोजनाभावात् किन्तु किं चित्साक्षादभेदबोधकं किं चित्परम्परया तत्र पर्यवसन्नम् । किं च भेदस्य प्रामाणिकत्वे तन्निन्दा न स्यात् । दृश्यते च सा यथा नारदीये । हरिरूपी महादेवो लिङ्गरूपी जनार्दनः । ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेदिति । कौर्मे च । ये त्विमं विष्णुमव्यक्तं मां च देवं महेश्वरम् । एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः । ये ऽन्यथा संप्रपश्यन्ति मत्वेमं देवतान्तरम् । ते यान्ति नरकान्घोरान्नहं तेषु च व्यवस्थितिमिति । इदं विधिभेददर्शननिन्दाया अप्युपलक्षणम् । तथा च भविष्योत्तरे । विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च । कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वध इत्यादि । कर्मविपाकस्मृतौ च । यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः । साधयेदुदरव्याधियुक्तो भवति मानव इति । वायुश्चाह । अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशय इति ।

ये तु वैष्णवंमन्याः शिवादिद्वेषं कुर्वन्ति ते न चेक्षुरसन्यायेन माया बहुरूपा । यथेक्षुरसो बहुरूपो ऽपि बहिर्मलिनो दृश्यते तथा माया ऽप्यन्तर्बहुरूपा ऽपि बहिस्तमोरूपा दृश्यते तस्याश्च यद्विमलतमं रूपं तदेव सत्त्वम् । इक्षुरसस्येव सिता । यथा चेक्षुमाधुर्यं सितायां कृत्स्नमभिव्यज्यते अन्यत्र मलसम्पर्कादल्पमल्पतरं च एवं परैश्वर्यं सत्त्वे ऽतिशुद्धे सर्वमभिव्यज्यते अन्यत्र मलिनदर्पणन्यायेनाल्पमल्पतरं च । किञ्च व्रीहिबीजन्यायेनापि रजस्तमसोः सारः सत्त्वं यथा व्रीहिबीजस्य स्थूलस्तुषः स्पष्टस्तत आन्तरः सूक्ष्मस्तुषः फलीकरणनामा ततो ऽप्यङ्कुरोत्पत्ति रान्तरत्वादेवं तमोरजसोर्गर्भात्सत्त्वादेव वि-

यदाद्युत्पत्तिः अतस्तदवच्छिन्नस्य विष्णोरेव जगद्धेतुत्वादीशत्वमितरयोस्तदभावाज्जीवत्वम् । अतः श्रेयःकामैः सत्त्वावच्छिन्नः परमेश्वरो हरिरेवाराध्यः । अन्यौ तु राजसं तामसं चैव दूरतः परिवर्जयेदिति न्यायात्त्याज्यावित्यादि निन्दां कुर्वन्ति ये च शैवंमन्या विष्णवादिद्वेषं कुर्वन्ति तेन च तमो वाइदमग्रआसीदिति श्रुतौ वैकारेण प्रलये गुणान्तराभावो दर्शितः । एवं च यथा व्रीहिस्तम्बे-प्रथमं तुष एवाविर्भवति ततस्तद्गर्भे प्रकृत्यापूरेण क्षीरं भवति तदपि पुनः प्रकृत्यापूरेण घनतां गतं तण्डुलाख्यः सारो भवति तस्मिंश्च सिद्धे तद्बीजं दृढं सदङ्कुरोत्पादनक्षमं भवति एवं शिवे प्रथमं तम एवासीत्तच्चेश्वरेणावरकत्वस्वाभाव्यादेकदेशे प्रच्यावितं वैषम्यात्प्रवृत्तिस्वभावत्वापत्त्या रजःसंज्ञं भवति एवं रजो ऽपि प्रवृत्तिस्वाभाव्यादेकदेशे प्रच्यावितं वैषम्यात्प्रकाशस्वभावत्वापत्त्या सत्त्वं स्यात् एवं गुणसामस्त्यविवक्षायां त्रिगुणमय एकपुरुषः तत्पृथक्त्वविवक्षायां तु त्रयः । तत्रापि तमउपाधिः शिव ईशः । रजउपाधिर्विधिः सत्त्वोपाधिर्विष्णुः तौ च कार्यगुणोपाधित्वात्कारणोपाधेः शिवस्यानुगौ जीवौ स्तः कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इत्यादिश्रुतेः । तथा च न हि भिक्षुक इत्यादिन्यायः तौ न श्रेयःकामोपासनार्हाविति त्वयोत्थापितो व्रीहिबीजन्यायो वक्ष्यमाणोष्ट्रलगुडन्यायेन तवैव मूर्ध्नि पतित इत्यादिनिन्दां कुर्वन्ति तेषां दुर्गतेर्माहात्म्यं तु किं वक्तव्यम् । यथा ऽऽह भगवान्युधिष्ठिरं प्रति भविष्योत्तरे । मम भक्तः शिवद्वेषी मद्द्वेष्टा च शिवप्रियः । तावुभौ नरकं यातो यावच्चन्द्रदिवाकराविति । भारते च शिवं प्रति । यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामन्वित्यादि । कौर्मे चर्षीन्प्रति । ध्यानं योग-

स्तपस्तप्तं ज्ञानयज्ञादिको विधिः। तेषां बिनश्यति क्षिप्रं ये द्विषन्ति पिनाकिनम्। यो मां समाश्रयेन्नित्यमेकान्तं भावमास्थितः। विनिन्दन्देवमीशानं स याति नरकं ध्रुवम्। तस्माद्धि परिहर्त्तव्या निन्दा पशुपतेर्द्दिजाः। कर्मणा मनसा वाचा तद्भक्तेष्वपि यत्नतः। ये तु दक्षाध्वरे शप्ता दधीचेन महर्षयः। भविष्यन्ति कलौ भक्तैः परिहार्याः प्रयत्नतः। द्विषन्तो देवमीशानं युष्माकं वंशसम्भवाः। शप्ताश्च गौतमेनार्व्यां न सम्भाष्या द्विजोत्तमैरिति। तत्रैव स्थलान्तरे। परात्परतरं यान्ति नारायणपरा जनाः। न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरमिति। हरश्चाह हरिं प्रति कैलासयात्रायाम्। यश्च त्वां द्वेष्टि गोविन्द स मां द्वेष्टि न संशय इत्यादि। कौर्मे चर्षीन्प्रति मूर्खं वा पण्डितं वा ऽपि ब्राह्मणं वा मदाश्रयम्। मोचयामि श्वपाकं वा न नारायणनिन्दकमिति। अतो ऽतिदुर्लभमिन्द्राद्यर्थनीयस्वगणभावं प्राप्तेनापि घण्टाकर्णेन हरिद्वेषिणा मोक्षायाराधितो ऽपि न तस्मै तं ददौ। यथा ऽऽह स हरिं प्रति। अहं पिशाचवेषेण संश्लिष्टः पापकर्मकृत्। सततं दूषयन्विष्णुं घण्टामाबध्य कर्णयोः। मम न प्रविशेन्नाम विष्णोरिति विचिन्तयन्। अहं कैलासनिलयमासाद्य वृषभध्वजम्। आराध्य तं महादेवमस्तुवं सततं शिवम्। ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः। ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ। मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः। मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः। तस्माद्गत्वा च बदरीं तत्राराध्य जनार्दनम्। मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रम इति। अत्र प्रसन्न इत्यनन्तरमिवेत्यध्याहार्यम्। यतः प्रसन्नतामुद्रादर्शनेन केवलं तं वञ्चितवान्न तु प्रसन्नः।

यश्च त्वां द्वेष्टीत्यादितदुक्तिविरोधेन हरिद्वेषिणि प्रसादायोगात् । कथमन्यथा तं न मोचयेत् । न तद्भक्तेर्मुक्तिहेतुत्वं तस्य च मोचकत्वं नास्त्येवेति शङ्क्यम् । अथ हैनं ब्रह्मचारिण ऊचुः किञ्जप्येनामृतत्वं ब्रूहीति स होवाच याज्ञवल्क्यः शतरुद्रियेणेति एतानि ह वा अमृतस्य नामधेयानि एतैर्ह वा अमृतो भवति सर्वदा सकृद्वा जपेदनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । शिव एको ध्येयः शिवङ्करः । प्रज्ञा च तस्मात्प्रसृता पुराणी । ध्यात्वा मुनिर्गच्छति भूतयोनिं ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम् । इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् । सर्वग्रहैर्गृहीतान्वै सर्वपापसमन्वितान् । स मोचयति सुप्रीतः शरण्यः शरणागतानित्याद्यसंख्यश्रुतिस्मृतिवचनाप्रामाण्यापत्तेः । शम्भुशङ्करादिशब्दानां डित्थादिवदनर्थकत्वापत्त्या संसक्तानां नित्यदा यत्करोषि शममित्यादिनिरुक्तिस्मृत्यप्रामाण्यापत्तेश्च । तस्मात्स्वभक्तिजमोक्षफलकज्ञानप्रतिबन्धकहरिद्वेषस्य शिवानुयायिष्वनुपपन्नश्रोत्रियविप्रवधानुमितस्य राक्षसत्वस्य च निवर्त्तनायेयमीशोक्तिः । द्वेषे ऽपगते च तस्य राक्षसत्वापगमज्ञानलाभौ तत्रैवोक्तौ । तेन म तत्कृतेशभक्तिवैयर्थ्यम् । कथमन्यथा ब्रह्मवधादिनिरतस्य हरौ दृढा भक्तिर्ज्ञानलाभश्चातिशीघ्रं स्यात् । जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते । श्रवणायापि बहुभिर्यो न लभ्यः । मनुष्याणां सहस्रेषु बहूनां जन्मनामन्तइत्यादिना तयोरतिदुर्लभतोक्तेः । तस्मात्प्रतिबन्धापाये शिवाराधनादेवाच्युतभक्तयवान्तरव्यापारकात्तस्य क्रमात्सदेहविदेहमुक्तिफलं ज्ञानं जातम् । तज्जन्यत्वे सति तज्जन्यजनकव्यापारत्वात् तन्निष्ठहरिभक्तेश्च तत्त्वात् ।

यत्त्वक्षयः स्वर्गवासस्तइत्यादिना कृष्णाज्ञया स्वर्गगमनं तस्य तत्रोक्तं तदपि ये स्वर्गमेव परं मन्यन्ते तदर्थं चातिप्रयासं कुर्वन्ति तैरप्यल्पायासा हरिभक्तिरेव कार्येति ज्ञापनार्थम्। न तु वस्तुत इन्द्राद्यैरप्यर्थनीयेशसामीप्यात्प्रच्याव्य ततो ऽतितुच्छे कारागारसदृशे स्वर्गे भक्तस्य पातनं युक्तम् न हि हरिभक्तिरधोगतये। महेशसामीप्यं त्वपारपुण्यपुञ्जप्रसादिततत्प्रसादलभ्यम्। यथा ऽऽहेशः स्वसामीप्यस्यातिदुर्लभतां सूचयन्दक्षाय भारते। परितुष्टो ऽस्मि ते दक्ष स्तवेनानेन सुव्रत। बहुना ऽत्र किमुक्तेन मत्समीपे भविष्यसीति। ननु शताश्वमेधकर्त्तुः शक्रस्यापि क्षणमपि दुर्लभं ते सामीप्यमेकस्यापि क्रतोरसमापयितुर्मे कथं भवितेति शङ्कमानं प्रत्याह। अश्वमेधसहस्रस्य वाजपेयशतस्य च। प्रजापते मत्प्रसादात्फलभागी भविष्यसीति। ननु यः कुरुते स भुङ्क्तइति न्यायेन कर्त्तुरेव फलं भवति अन्यथा ऽतिप्रसङ्गात्तथा चाश्वमेधाद्यकर्त्तुर्मे कथं तत्फलभाक्त्वमित्याशङ्क्याह मत्प्रसादादिति। पुनरावृत्तिफलकैस्तैरपुनरावृत्तिरूपं ते सामीप्यं कथं स्यादिति तच्चिन्तामालक्ष्याह। भूयश्च ते वरं दद्मीत्यादिना त्यज्यतां मानसो ज्वर इत्यन्तेन। न चेमे वराः स्वसामीप्यादन्य एवेशेन दत्ता इति भ्रमितव्यम्। बहुना ऽत्र किमुक्तेनेति प्रागेव वरपर्यवसानोक्तेः। एकयज्ञनाशे शिवसामीप्याश्वमेधसहस्रवाजपेयशतलाभे च सति मानसज्वरासम्भवादन्यवरदानेन तत्प्रगानुज्ञानुपपत्तेश्च मदुक्तप्रकारेण तूभयं युज्यते। शिवधर्मोत्तरे च। ये संप्राप्ताः परं स्थानं ध्यानयोगरता नराः। न तेषां पुनरावृत्तिर्घोरसंसारसागरे। सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णा महेश्वराः। शिवतुल्यबलोपेताः परं शिवपुरं गताः। इतीशसामीप्यमहिमा

स्मर्यते। नन्विदं माहात्म्यं शिवपुरं गतानां तत्सामीप्यसारूप्यलक्षणां मुक्तिंप्राप्तानामयं तु तदनुचरो न तु तत्पुरवासीति चेच्छृणु तर्हि गीतज्ञो यदि गीतेनेत्यादियाज्ञवल्क्याद्युक्तरीत्या शिवप्रसादहेतुगानविद्याद्यभ्यासेनेशानुचरत्वं प्राप्तानामपि माहात्म्यम्। तेषां पदं हिरण्यगर्भादिपदेभ्योऽपि श्रेष्ठं स्मरन्ति पौराणिकाः। भिन्दन्ति शैलानुदधीन्पिबन्ति व्यत्यासयन्ति क्षितिमन्तरिक्षम्। तृणीकृतब्रह्मपुरंदराणां किं दुष्करं शंकरकिङ्कराणामिति। ते हि साक्षाद्दिविषदो ह्यन्तरिक्षसदस्तथा। पृथिवीषद इत्येते विज्ञेयास्त्रिविधा गणा इत्यादिपुराणाद्युपबृंहिता देवव्रतरुद्रोपनिषदादयश्चैषामपरिमितं महिमानं ख्यापयन्ति। द्वितीयं जप्त्वा गाणपत्यमवाप्नोतीत्यथर्वशिरश्च महाफलप्रायपाठे शिवानुचरत्वं कीर्त्तयद्देवान्तरेभ्यो ऽस्यातीवोत्कर्षं स्फुटयति। अत एवोक्तं भक्तैः भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं किमित्यमरसम्पदः प्रमथनाथ नाथामहे। भवद्भवनदेहलीविकटतुण्डदण्डाहतिस्फुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयत इति। बहुगणसहायस्य चास्य गणाधिपत्वमवगम्यते आगतो ऽहं महाशैलात्कैलासादिति तदुक्त्या कैलासवासित्वं च तथा च कथं तस्य स्वर्गगमनं हरिकृपालभ्यं स्यात्। ईदृशस्य हरिद्वेषे प्रवृत्तिस्तु जयविजययोः सनकादिशासने प्रवृत्तिरिव ब्रह्मद्वेषिणां दुर्गतिसूचनाय हरीच्छयैव। शैवापसदानामन्येषां विष्णुद्वेषिणां कैमुतिकन्यायेन दुर्गतिसूचनाय हरेच्छयैवेति बोध्यम्। तस्मादुक्ताभिप्रायैवा ऽस्य स्वर्गगमनोक्तिः स शिवसमीप एवागत इति तु तत्त्वम्। अतः कृष्णाय वरं दातुमागतेनेशेनागतानां गणमुख्यानां वर्णनप्रसङ्गे ऽस्यादावेव वर्णनम्। तस्याग्रे समपद्यन्त भूतसंघाः सहस्रशः। घण्टाकर्णो विरू-

पाद्तः कुण्डधारो ऽकृमुद्वह इति। तस्मादुक्ताभिप्रायमेवे-दमाख्यानम्। एवं हरिविधिभक्तस्यापि दक्षस्येशद्वेषिणो दुःखाद्युक्तिरपि भारतादौ शिवद्वेषिणामन्येषां वैष्णवा-पसदादीनामुक्तन्यायेन दुर्गतिसूचिका द्वेषापाये सुगतेश्च सूचिकेति बोध्यम्। किंच तामसत्वात्कृष्णो रुद्रः सात्त्वि-कत्वेन शुक्लस्य हरेर्ध्यानात् कीटभृङ्गन्यायेन शौक्ल्यं गतः एवं श्वेतो हरिः श्यामस्येशस्य ध्यानात्कार्ष्ण्यं गत इति पुराणे प्रसिद्धम्। शिवाय विष्णुरूपाय विष्णवे शिवरू-पिणइति हरिवंशे च स्पष्टीकृतमिदम्। तथा च शुक्लं शिवं द्विष्यन्तो हरिमेव द्विष्यन्तीति कथं ते वैष्णवाः। एवं श्यामं हरिं द्विष्यन्तो हरमेव द्विष्यन्तीति कथं ते शैवा इति ध्येयम्। अथ प्रकृतमनुसरामः। वाल्मीकीयरामा-यणे वने रामगमनं मे ऽनुमतं नास्तीति कौशल्याप्रत्याय-नार्थं भरतो बहून् शपथान्कृत्वा ऽतिघोरमेतं शपथं मत्वा-न्ते चकार। भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः। तस्य पापेन लिप्येत यस्यार्यो ऽनुमते गत इति। अत्रादौ हरिहरादेरिति शेषः। मार्गं तत्तन्माहात्म्यबोधकं शास्त्रम्। मार्गमित्युक्त्या तु शास्त्रोक्तं तत्तदुपासनार्थं तत्तदुत्कर्ष-वर्णनरूपमार्गमेवाश्रित्य न तु तद्वार्दं ज्ञात्वेति ध्वन्यते। विवदमानेषु हरादेरुत्कर्षापकर्षोक्त्या कलहं कुर्वत्सु यत्पा-पम् अथ च पश्यतः शृण्वतो यत्पापं तस्य पापस्य सम्ब-न्धिना तत्तुल्येनेति यावत् न त्वन्यस्य पापेनान्यस्य लेपसम्भवः। तेनेति पाठस्तु सुगमः। अत्रापि पश्यत इत्यु-क्तेर्विवादं श्रुत्वा ऽयमुत्कृष्टो ऽन्ये ऽपकृष्टा इति यो निश्चि-नोति तस्य यत्स्यात्पापमिति भावः। यद्यप्यन्यतमविग्र-हावच्छिन्नेशनिन्दां शृण्वत उदासीनस्यापि पापं भवत्येव कर्णौ पिधाय निरियाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृ-

भिरस्यमाने छिन्द्यात्प्रसह्य रुशतीमसतां प्रभुश्चेज्जिह्वाम-
सूनपि ततो विसृजेत्स धर्म इति भगवत्येशनिन्दाश्रवण-
स्यापि निषेधात् तथा ऽपि तस्येदमित्थमेवेति जानतः
सकाशादस्ति किञ्चिदश्मलोष्टन्यायात्पापाल्पत्वमित्यभि-
प्रायः । तथा स्कान्दे ऽप्युमापरीक्षार्थमागतेन मायावटुना
शिवेन शिवनिन्दायां कृतायां तां शृण्वतीः सखीः प्रत्यु-
मोक्तिः आर्याणां निन्दनं श्रुत्वा ये न यान्ति त्वरान्विताः
स्थानान्तरं ह्यप्रतिष्ठास्ते ऽपि स्युः पापयोनय इति । अपिः
कैमुतिकन्यायद्योतकः यदीशनिन्दां श्रुत्वा ये शीघ्रं देशा-
न्तरं न यान्ति ते ऽपि न विद्यते प्रतिष्ठोत्तमलोकाप्ति-
लक्षणा येषां तादृशाः सन्तः पापयोनयः कृमिमशकादि-
जन्मानः स्युर्भवन्ति तर्हि निन्दकास्तादृशा भवन्तीति
किमु वक्तव्यम् । यथा ऽऽहोपमन्युर्हरिं प्रति । यश्चाप्य-
सूयते देवं कारणात्मानमीश्वरम् । स कृष्ण नरकं याति
सह पूर्वैः सहात्मजैरिति । एवं हि दुर्गतिभिया शास्त्रे प्रवृ-
त्तानामपि दुर्भगानां विध्यादिष्वेकभक्त्या ऽन्यनिन्दकानां
बिल्वखल्वाटन्यायेन पुनर्दुर्गतौ प्रवेश इति कोटिशो वा-
क्यानि बोधयन्ति विस्तरभयाद्दिङ्मात्रमेवेह दर्शितम् ।
यद्यप्येकपक्षपातेनान्यनिन्दकानामप्यस्ति तात्कालिकः
कश्चिद्हर्षांशविशेषस्तेषां नास्तिकसुहृदां तथा ऽपि कोशपा-
नन्यायान्मिथ्यावादिनां तेषां परिणामे ऽतिदुःसहं दुःख-
मित्यास्तिकैस्त्याज्यो ऽयं दुराग्रहः । तेषां च सङ्गो ऽप्य-
वश्यमेव त्याज्या दुस्तटिनीति न्यायात्त्याज्यः । अन्यथा
चौरापराधान्माण्डव्यनिग्रह इतिन्यायात्तत्सङ्गिनामपि दु-
र्गतेरवर्ज्यत्वात् । तत्तद्विग्रहावच्छिन्नेशाभेददर्शिनां त्वन्य-
तमविग्रहावच्छिन्नोपासकानां निष्कामानां नितरां निर्म-
लस्वान्तानां तत्प्रसादात्तत्तत्त्वसाक्षात्कारेण मोक्षः ।

सकामानामप्यर्चिरादिमार्गेण सत्यलोकं गतानां हिरण्यगर्भेण सह मोक्षः। तदुक्तमीश्वरगीतायाम्। ये त्विमं विष्णुमव्यक्तं मां च देवं महेश्वरम्। एकीभावेन पश्यन्ति न तेषां पुनरुद्भव इति। अत्र हरिहरयोर्ग्रहणं काकदधिघातकन्यायेन विधेरप्युपलक्षणं यथा ऽह हरिर्दक्षं प्रति भागवते। अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्। आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषण इत्यादिना त्रयाणामेकभावानां यो न पश्यति वै भिदाम्। सर्वभूतात्मनां ब्रह्मंत्स शान्तिमधिगच्छतीत्यन्तेन। एवं हरिहरद्वेषनिन्दानिन्दकं वचो ऽप्युपलक्षणं बोध्यम्। किं बहुना सर्वदेहावच्छेदस्य सर्वेषु साधितत्वादेकनिन्दाद्वेषयोः सर्वविषयत्वादेकनिन्दकः सर्वनिन्दक एकद्वेष्टा सर्वद्वेष्टा चेति बोध्यम्। ननु ब्रह्मादीनां सर्वेषां किं नाम सर्वेषु चतुर्मुखादिदेहेषु वृत्तित्वम्। न तावद्गणपतिन्यायेन भिन्नभिन्नावयवावच्छेदेनैकैकदेहे भिन्नभिन्नदेशवृत्तित्वं तत्। परिच्छिन्नत्वसावयवत्वादिप्रसङ्गेनानित्यत्वापातात्। अत एव न तिलतण्डुलन्यायेन सर्वदेहेष्वेषां संसृष्टिर्नीरक्षीरन्यायेन सङ्करो वा ऽपि सम्भवति। अतो ऽनुपपन्नो ऽयं पक्ष इति चेन्न वेण्याकाशन्यायेनात्यन्ताभेदस्यैव स्वीकारात्। न हि प्रयागे ऽन्योन्यसंसर्गैणैकप्रवाहीभूते श्वेतश्यामरक्तवर्णे गङ्गायमुनासरस्वतीनीरे प्रतिबिम्बितस्य तदवच्छिन्नस्य वा ऽऽकाशस्य भेदलेशो ऽप्यस्ति। किञ्च यतो वा इमानि भूतानि जायन्ते सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं सो ऽकामयत बहु स्यां प्रजायेयेत्यादिना ऽऽखण्डाद्वितीयं ब्रह्म सृष्टेः प्रागासीत्तस्मादेव मायोपहितादभिन्ननिमित्तोपादानात्सर्वं जगदुत्पन्नं तेनैव च सत्तास्फूर्त्तिमत् तत्रैव चान्ते लीयते इति बोध्यते। ऐतदात्म्य-

मिदं सर्वमित्यादिना च सर्वात्मत्वं तस्योच्यते । तं त्वौपनिषदं पुरुषं पृच्छामि सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतिभिरुपक्रमादिलिङ्गैश्च तत्रैव सर्ववेदतात्पर्यमिति ज्ञायते । अत एव तदुपबृंहणभूतपुराणादेरपि तत्रैव पर्यवसानम् । अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेद इत्यागमेन तस्यैवाखिलागमाविर्भावहेतुतोच्यते अयमर्थो जन्माद्यस्य यतः शास्त्रयोनित्वात्तत्तु समन्वयादित्यादिसूत्रभाष्यादिषु प्रपञ्चितः । पुरुषान्न परं किंचित्सा काष्ठा स परा गतिरित्यादिश्रुत्या च तस्यैव सर्वोत्कृष्टत्वं मुक्तप्राप्यत्वरूपपरमगतित्वं चोक्तम् । अथ पुरुषो ह वै नारायणो ऽकामयत प्रजाः सृजेयेत्यादिश्रुतौ तु जगद्धेतुत्वं हरेरुच्यते । अथ नित्यो देव एको नारायणो ब्रह्मा च नारायण इत्यादिना च सर्वात्मत्वं तस्यैवाम्नायते । स्वतो ऽसङ्गोदासीनस्य कारणत्वासम्भवान्मायिनस्तद्वाच्यम् । तच्च मायित्वं दैवी ह्येषा गुणमयी मम मायेति हरिवाक्याद्धरेरेव ज्ञायते । तद्विष्णोः परमं पदमिति श्रुत्या यद्गत्वा न निवर्त्तन्ते तद्धाम परमं ममेति स्मृत्या च मुक्तप्राप्यता ऽपि तस्यैव प्रतीयते । अत्र सर्वत्र षष्ठी राहोः शिर इतिवदभेदे बोध्या । एकस्त्वमग्र्यं परमं पदं यदित्यादौ सामानाधिकरण्यदर्शनात् । एतेन तद्विष्णोरिति भेदे षष्ठीं पञ्चमीं च वदन्तो ऽपास्ताः । मत्तः परतरं नान्यत् न त्वत्समो ऽस्तीत्यादिना सर्वोत्तमता ऽपि तस्योच्यते । तथा नारायणपरा वेदा नारायणपरा मखाः । वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते तथा मध्ये हरिः सर्वत्र गीयते । वेदैरशेषैरहमेव वेद्यो वेदान्तकृदित्यादिना श्रुत्यादितात्पर्यभूमित्वं तत्कारणत्वं च हरेरवगम्यते । ओं देवा हवै स्वर्गलोकमायन् ते देवा रुद्र-

मपृच्छन् को भवानिति । सो ऽब्रवीदहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादिश्रुतौ तु शम्भोरेव सृष्टेः प्राक्सत्त्वमद्वितीयत्वं जगत्कारणत्वं सर्वात्मत्वं चाम्नायते । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति मायित्वमपि तस्य श्रूयते । न चात्र महेश्वरशब्दो ऽन्यपरः । तत्र मन्त्रे बहूनां शिवनाम्नामेवोपलब्धेः दक्षश्च महेश्वरं प्रति निमन्त्रणाभावे सर्वभूतकरो यस्मात्सर्वभूतपतिर्हरः । सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः । त्वमेव हीज्यसे यस्माद्यज्ञैर्विविधदक्षिणैः । त्वमेव कर्त्ता सर्वस्य तेन त्वं न निमन्त्रित इति हेतूक्तिव्याजेन तस्य सर्वहेतुत्वं सर्वान्तरात्मत्वं सर्वयज्ञयष्टव्यत्वं च विशेष्यसम्बन्धित्वेनान्ययोगव्यवच्छेदिभ्यामेवकाराभ्यामन्ययष्टव्यत्वकर्तृत्वयोर्निषेधं चोपपाद्य अथ वा मायया देव सूक्ष्मया तव मोहितः एतस्मात्कारणाद्वा ऽपि प्रभो त्वं न निमन्त्रित इति तत्रैव हेत्वन्तरोक्तिच्छलेन शुद्धे तस्मिन्नसम्भवि पूर्वोक्तकारणत्वोपपादकं मायित्वमपि तस्यैवोवाच । एवं यो मां वेत्ति स वेदान्वेत्ति साङ्गानित्यथर्वशीर्षे शम्भुज्ञानस्य साङ्गवेदज्ञानव्याप्यत्वोक्तेस्तज्जन्यत्वोपलम्भात्तद्विषयीभूतमहेशस्य तत्प्रतिपाद्यत्वं निश्चीयते । वेदाः साङ्गोपनिषदाः पुराणाध्यात्मनिश्चयः । यदत्र परमं गुह्यं स वै देवो महेश्वर इति द्रोणपर्वान्तर्गतशतरुद्रीये । पठ्यते सर्वसिद्धान्तैर्वेदान्तैर्यो मुनीश्वरेति पाद्मे च स्पष्टं साङ्गवेदपुराणादितात्पर्यभूमित्वं शम्भोः स्मर्यते । तस्मात् परतरं नान्यत्किंचिदस्ति महेश्वरादिति । तस्मान्नान्यः परो देवस्त्रिषु लोकेषु विद्यतइति च क्रमेण तयोरेवास्य सर्वोत्तमतोच्यते हरिवंशे च हरिवाक्ये । नान्यस्त्वत्तः परमो देवदेव जगत्पतिः सुरवीरारिहन्ता । नान्य-

द्भूतं त्वत्समं देवभूतं भूतं भव्यं भवदेवाथ नास्तीति। तत्रैव। वेदा वेदाङ्गैः सहितास्त्वत्प्रसूता यज्ञो दीक्षा च दक्षिणा चाभिरूपेति वेदादिहेतुत्वमपि तस्योक्तम्। मुक्तप्राप्यत्वमपि परमपरायणं तत्त्वमिति तस्य श्रूयते। स्मर्यते च त्वं धाम परमं पदमित्यादि। अपि च भगवता गीतायाः सप्तमनवमदशमाध्यायेषु स्वस्य सर्वात्मत्वज्ञापको यो विभूतियोगो दर्शितः अन्यत्रापि तत्परपुराणादिषु च सोऽपि हरपरेतिहासपुराणादिषु तस्य दर्शितः। यथा मोक्षधर्मे दक्षस्तवराजे। व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनामित्यादि। यच्चैकादशे तत्प्रत्यायकं विश्वरूपं हरिणा दर्शितं तदप्यत्र शम्भोरुक्तम्। भवच्छरीरे पश्यामि सोममग्निं जलेश्वरम्। आदित्यमथ वै विष्णुं ब्रह्माणं च बृहस्पतिमित्यादि। किंचैकादशएवामी हि त्वामित्यादिना मया हतांस्त्वं जहीत्यन्तेन हरिणा हता एव भीष्मादयोऽर्जुनेन हता इति ज्ञायते। शतरुद्रिये चार्जुनप्रश्नोपन्यासवाक्यार्थ इति न्यायात्तेन हता एव कौरवाः पार्थेन हता इति निश्चीयते। किंच एष एव साधु कर्म कारयति अन्नादो वसुदानः फलमत उपपत्तेरित्यादिश्रुतिसूत्रैः परात्मनः शुभाशुभकर्मफलदातृतोच्यते। अन्नमासमन्ताद्ददातीत्यन्तादः। ततो ह्यस्य बन्धविपर्ययावित्यादिना च बन्धकत्वं मोचकत्वं चेशस्योच्यते। लभते च ततः कामान्, क्षिपाम्यजस्रमशुभान्, तेषामहं समुद्धर्तेत्यादिना तत्सर्वं हरेरुच्यते। स मोचयति सुप्रीतः शरण्यः शरणागतान्। आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान्। स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः। सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते। स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः। समेधयति यन्नित्यं सर्वार्थ

सर्वकर्मसु । शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः । सर्वथा यः पशून्पाति तैश्च यद्रमते पुनः । तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृत इत्यादि भारते । ब्रह्मादिस्तम्बपर्यन्तान्पशन्बद्ध्वेत्यादिपुराणेषु च तत्सर्वं हरस्योक्तम् । देव्यथर्वशिरसि तु यत्सृष्टेः प्राग्विद्यमानाद्वितीयरूपत्वादिकं प्रागुदाहृताथर्वशीर्षे शिवस्योक्तं तत्सर्वं शिवाया दर्शितम् । हरिवंशे च हरिप्रणीतोमास्तवे । आद्या सा सर्वभूतानां निष्ठा च परमा गतिरिति तस्याः सर्वाधिष्ठानत्वं मुक्तप्राप्यत्वं चोक्तम् । तत्रैव । लक्ष्मीरूपेण दानवानां वधाय चेत्यादिना त्वया व्याप्तमिदं सर्वं जगत्स्थावरजङ्गममित्यन्तेन तस्याः सर्वात्मता चोक्ता । तथा भविष्योत्तरे उमोक्तिः यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं नित्यदेहस्था स च नित्यं मयि स्थितः । न पश्येत्सर्वभूतेषु न च सर्वं मयि स्थितम् । स तु पर्वतदुर्गेषु मार्गमाणो विनश्यतीति । मात्स्ये च सर्वगा सर्वभूतेषु द्रष्टव्या परमेश्वरी । सर्वलोकेषु यत्किं चिद्रहितं न तया विनेति । मार्कण्डेये तु तया विसृज्यते विश्वं जगदेतच्चराचरम् । सैषा प्रसन्ना वरदा नृणां भवति मुक्तये । संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरीत्यादिना प्रागुक्तं सर्वं गौर्या दर्शितम् । सनत्कुमारसंहितायाम् । विद्ये वेदान्तगीते श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे मार्गातीतस्वरूपे इत्यादिना वेदान्तोपपाद्यत्वमोचकत्वादिकं सरस्वत्या उक्तम् । सरस्वतीं नमस्यामि चेतनां हृदि संस्थिताम् । मतिदां वरदां चैव सर्वकामफलप्रदाम् । सुखमोक्षप्रदामित्यादिना बृहस्पतिश्च तत्सर्वं तस्या दर्शितवान् । तस्याः समुद्रा अधि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः । क्षरत्यक्षरं तद्विश्वमुपजीवतीत्यादिश्रुत्या ऽप्यस्या जगदुत्पाद-

कत्वपालकत्वादिकमुक्तम् । अयमर्थः । तस्या वाचः सकाशात्समुद्रा मेघा नद्यश्च समुद्रवति जलमस्मादिति व्युत्पत्तेः । अधि अधिकं प्रभूतमुदकं विक्षरन्ति वाग्देवतारूपेणान्तर्यामिणा प्रेरिता मेघादयो जलक्षरणादिकं कुर्वन्ति । अक्षरं प्रधानं तदधिष्ठितं सत्क्षरति ईक्षणादिघटाद्यन्तकार्याकारेण परिणमते । अत्र तस्या इति तेनेति च स्त्रीपुल्लिङ्गनिर्देशेनास्या मायामहेशोभयरूपत्वं ध्वनितम् । तच्च मायोपहितब्रह्मरूपत्वे पर्यवस्यति । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियमिति लक्ष्म्याः सर्वेश्वरत्वं श्रूयते । स्मर्यते च जगत्कारणत्वसर्वात्मत्वमोचकत्वादिकं वैष्णवे । नमस्ये सर्वभूतानां जननीमब्जसम्भवाम् । त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनीत्यादिना शरीरारोग्यजैश्वर्यमरिपक्षक्षयः सुखम् । देवि त्वदृष्टिदृष्टानां पुरुषाणां न दुर्लभमित्यन्तेन तत्रैव । तन्निबोध यथा सर्गे भगवान्संप्रवर्त्तते । नारायणाख्यो भगवान्ब्रह्मा लोकपितामहः । उत्पन्न उच्यते विद्वन्नित्य एवोपचारतः । एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः । भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः । जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भवः । प्रजाः ससर्ज भगवान्ब्रह्मा नारायणात्मकः इत्यादिना विधेर्जगदुत्पत्तिप्रलयहेतुत्वयोगिचिन्त्यत्वादिकमुक्तम् । एवं शैववैष्णवादिमतेषु दर्शितान्यदर्शितानि चापीदृशानि सर्वाण्येव स्मर्त्तव्यानि । एतानि च यदि संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यतइति न्यायात्प्रागुदाहृतसामान्यवाक्यैरेकवाक्यतां नीत्वैतत्प्रतिपाद्यानां हरिहरादीनामेकवाक्यतापन्नानां संभूयैकार्थप्रतिपादकत्वमिति न्यायेनैकाद्वितीयब्रह्मरूपतोपेयते तदा प्रमाणानि भवन्ति । अन्यथा त्वन्योन्यं विरोधं प्राप्य विनिगमना-

विरहेण सर्वाण्यपि सुन्दोपसुन्दन्यायाद्बाधितानि स्युः। न हि सर्वेषामन्योन्यभिन्नानां तत्तच्छास्त्रोक्तं सर्वेश्वरत्वाद्वयत्वादिकं संभवति विकल्पसमुच्चयादीनां प्रागेव निरस्तत्वात्। तस्माच्छ्रुतिस्मृतिप्रामाण्यमिच्छद्भिस्तदभेद एवोपेयः। यस्तु ते उल्लङ्घ्य दुराग्रहात्कुतर्कैस्तद्भेदं साधयति स न शैवो न वा वैष्णवः किं तु नास्तिक एवेति मन्तव्यम्। यथा ऽऽह हरिः। श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तो ऽपि न वैष्णवः इति। मनुश्च श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः। ते भूते यो ऽवमन्येत हेतुशास्त्राश्रयो द्विजः। स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दक इति। ईदृशश्च बन्धुभिरपि त्याज्यः। अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चतीति न्यायात्। किंच दुराग्रही वैष्णवो वा शैवो वा प्रष्टव्यो बुधैः। किं विष्णोर्भिन्नः शिवः शिवाद्भिन्नो वा विष्णुः। नाद्यः। घटाद्भिन्नस्य पटादेरघटत्ववद्विष्णुभिन्नस्याविष्णुत्वापत्त्या ऽऽनन्दात्मकशिवरूपत्वमपि न स्यात्। यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति श्रुतेः। पुरुषोत्तमाद्भिन्नस्यापुरुषोत्तमत्वं मुकुन्दभिन्नस्यामुकुन्दत्वं च ध्रुवम्। तथा चालं तदुपासनया मुमुक्षूणाम्। न द्वितीयः। शिवशम्भुशङ्करमहेश्वरभिन्नस्याशिवाशम्भ्वशङ्करामहेश्वरत्वापत्त्या ऽनुपास्यत्वप्रसङ्गात्। शिव एको ध्येयः शिवंकरः अन्यत्सर्वं परित्यज्येति श्रुतेः। अत एवोक्तं हरिवंशे न विना शङ्करं विष्णुर्न विना केशवं शिव इत्यादि। शिवस्य विष्णोर्भिन्नत्वे ऽपि न विष्णोः शिवाद्भिन्नत्वमिति तु न वैष्णवेन वक्तुं शक्यम् एवमन्यत्रादर्शनात्। न विना केशवं शिव इत्युक्तिविरोधाच्च स्वपक्षक्षतेश्च। तथा च वध्यतां वध्यतां बालो नानेनार्थो ऽस्ति जीवता। स्वपक्षहानिकर्तृ-

त्वाद्यः कुलाङ्गारतां गत इति न्यायविषयता नातिवर्तते । एवं शैवमते ऽपि बोध्यम् । तस्मात्तत्तल्लीलाविग्रहावच्छिन्ने परे ब्रह्मणि नौपाधिको ऽपि भेदः कल्प्यः । तथा च व्याससूत्रम् न स्थानतो ऽपि परस्योभयलिङ्गं सर्वत्र हीति । अपि चैवमेके इति च । स्थानत उपाधितो ऽपि परस्येशस्योभयलिङ्गमनेकरूपत्वं नास्ति सर्वत्र ब्रह्मपरेषु वेदान्तेषु तदेकत्वस्य श्रवणादित्याद्यसूत्रार्थः । एके शाखिनो मृत्योः स मृत्युमाप्नोतीत्यादिभेदनिन्दापूर्वकमभेदमेव परमात्मनः समामनन्तीति द्वितीयार्थः । तर्हि तत्तत्पुराणेष्वितरासाधारण्येन तत्तत्प्रतिपादनमप्रमाणं स्यात् । वैष्णवं शैवमित्यादिपुराणसंज्ञाभेदाश्चानर्थकाः स्युः। चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुराणेषु शिष्टैस्तु भगवाञ्छिव इत्यादिप्रभासखण्डादिगतं विभागवचनं चाप्रमाणं स्यात् । तथा चाभेदवचःप्रामाण्यसाधने प्रवृत्तानां भवतामेकं संधित्सतो ऽपरं प्रच्यवतइति न्यायविषयत्वं दुर्वारम् । तथा चौपधिको भेदो ऽवश्यमुपेय इति चेन्न । तत्तद्गुणकार्यसर्गादिप्राधान्यविवक्षया रजआद्यवच्छिन्न इव तत्तल्लीलाविग्रहावच्छिन्ने ऽपीशे तत्तच्छब्दप्रवृत्तिसम्भवात् । एतद्विवक्षया ऽपि च संज्ञाभेदमात्रं परस्य कृषीवलस्येव पूर्वोक्तसंज्ञाभेदः । तदुक्तं वैष्णवे । सृष्टिस्थित्यन्तकरणाद् ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दन इति । मार्कण्डेये ऽपि कृषीवलदृष्टान्तपूर्वकमेवमेवोक्तम् । केचित्तु सत्त्वादिगुणावच्छिन्नेशवचतुर्भुजादिदेहवृत्तिजातिविशेषविशिष्टस्यापीशितुर्विष्णवादिशब्दवाच्यत्वम् । तथा च श्रुत्यादौ तत्तच्छब्देन तत्तन्मात्रव्यवहारोपपत्तिरित्याहुः । एवं च रुद्रशब्दितस्य तमोवच्छिन्नचैतन्यस्य चतुर्भुजदेहाभिमानित्वात् तदभिमानविषयस्य

च त्रिनेत्रदेहस्य विष्णुशब्दितस्य सत्त्वावच्छिन्नचिदभिमानविषयत्वात् चतुर्मुखदेहस्यापि तयोरभिमानगोचरत्वात् रजोऽवच्छिन्नस्योभयाभिमानित्वाच्च यो विष्णुः स तु वै रुद्रो यो रुद्रः स पितामह इत्यादेराञ्जस्यम् । चतुर्भुजदेहस्यैव तदभिमानिनोर्हरिहरयोरपि हरिनारायणादिशब्दाभिधेयत्वान्नामानि तव गोविन्देत्यादेराञ्जस्यम् । उक्तविवक्षया संज्ञाभेदादसाधारणव्यवहारादेराञ्जस्यं चेति सर्वं चतुरस्रम् । कारणीभूततमःप्रभृत्यवच्छिन्नेशस्य रुद्रादिसंज्ञा मैत्रायणीशाखादौ श्रूयन्ते । अथ यो ह खलु वावाऽस्य तामसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं रुद्रः अथ यो ह खलु वावाऽस्य राजसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वावाऽस्य सात्त्विकोंऽशोऽसौ स ब्रह्मचारिणो योऽयं विष्णुः स वा एकस्त्रिधाभूत इत्यादि । अयमर्थः तामसः तमःप्रधानत्वेन तत्कार्यसंहारक्रियाप्रधानत्वेन वा विवक्षितोंऽश इवांशो हे ब्रह्मचारिणः । एवमग्रेऽपि । न च तामसादिपदेन केवलतमआद्यवच्छिन्ना विवक्षितः तमआदेरन्योन्यसहचरस्वभावत्वात् । यथाऽऽहुः सांख्याः । अन्योन्यमिथुनवृत्तय इति । आगमश्चात्र भवति । अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः । रजसो मिथुनं सत्त्वं सत्वस्य मिथुनं रजः । तमसश्चापि मिथुने ते सत्त्वरजसी उभे । उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते । नैषामादिः संप्रयोगो वियोगो वोपलभ्यत इति । मिथुनपदेन सर्वत्राविनाभाववर्त्तित्वलक्षणं सहचरणशीलत्वं विवक्षितम् । तथा च यथोक्तव्याख्यानमेव तामसादिपदेषूचितम् । एतेन प्रलये तम एवावशिष्यतइत्यादिकल्पनाऽप्यपास्तेत्यलमतिप्रसङ्गेन । तथा मैत्रेय श्रूयतामेतद्यत्पृष्टोऽहमिदं त्वया । विष्णोरशांशसंभू-

तिचरितं जगतो हितमित्यादिवैष्णवादौ कृष्णादावप्यंशत्वव्यवहार औपचारिकः । न ह्येतत्पाषाणांशो ऽयं कणइतिवत्सम्भवति निष्कलत्वश्रुतिविरोधात् । अत एवेन्दोरंशो गुरुरितिवदपि न । तद्वदेव भिन्नत्वापत्तेश्च । नापि बिम्बप्रतिबिम्बभावेन सः अवताराणां जीवत्वापत्तेः । नन्वैश्वर्यावृतत्वाविद्यावच्छिषयकर्मकर्तृत्वादिरूपजीवलिङ्गसत्त्वात् जगदुत्पादकत्वादीशलिङ्गासत्त्वाच्चेषुमेव तेषां तदिति चेन्नूनं दुर्मतिरसि यतः अजो ऽपि सन्नव्ययात्मेत्याद्यसंख्यवाक्यानि पश्यन्नपि न पश्यसीव । कर्मकर्तृत्वं तु लोकानुग्रहायैवेशस्य । यदि ह्यहं न वर्त्तेयमित्यादितदुक्तेः । एवं रामादिष्वपि बोध्यम् । तमुद्दिश्य ह्युक्तं भागवते स्त्रीसङ्गिनां गतिरियं प्रथयंश्चकारेत्यादि । शिवावतारस्य भैरवस्यब्रह्महत्याव्रताचरणं लोकसंग्रहायेति काशीखण्डादौ स्पष्टम् । महादेवांशसंभूतमित्यादिना ऽत्रांशत्वोक्तिरप्युक्तरीत्यौपचारिक्येव । एवं श्रीगणेशस्य ब्रह्मवैवर्त्ते विष्णवंशत्वोक्तिः अन्यत्र क चिद्रुद्रांशत्वोक्तिः क चिद् ब्रह्मांशत्वोक्तिर्या सा ऽपीदृशी । गुहे क चिद्विष्णवंशत्वोक्तिः क चिच्छिवांशत्वोक्तिश्चैवमेव । मल्लारिस्तु साक्षाच्छिव एव न तत्रांशत्वकथापीति प्रसिद्धं ब्रह्माण्डपुराणे । कथं तर्हि रामकृष्णादौ गर्भवासादिपुरःसरं जन्म क्रमेण च बाल्याद्यवस्थाः युद्धे मूर्छादिकं भार्याद्यर्थं विलापादिरिति चेति चेत् मायैव । यतो दृश्यतएवेन्द्रजालवन्न तु वस्तुतो ऽस्ति अखण्डचिदानन्दघनत्वाद्रामादेः । तदुक्तं ब्रह्माण्डपुराणे । स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते । किं तु निर्दोषचैतन्यं सुखं नित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा । तथा ऽप्यसुरमोहार्थं परेषां च क चित्क चित् । दुःखाज्ञानभ्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क व्रणा

दि क चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे । मोक्षाभावाय तेषां तु दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहो ऽपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृतिमिति । विष्णोरित्युपलक्षणम् । नन्दगृहादौ दुर्गादेरवतारो ऽप्येवमेव । तथा च रामावतारे शोकज्ञापनाफलं रावणस्यैश्वरत्वबुद्धिप्रतिबन्धेन मुक्त्यभावो मृत्युसिद्धिश्च । मनुष्यातिरिक्तेन मरणाभावस्य तेन वृतत्वात् । कृष्णावतारे देहत्यागज्ञापनस्य मर्त्यानां वैराग्यं फलम् । यत्तु वैष्णवे । एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यत इत्युक्तम् । तस्यायं भावः सुराः समस्ताः सुरनाथ कार्यमेभिर्मया यच्च तदीश सर्वम् । आज्ञापयाज्ञां परिपालयन्तः सदैव तिष्ठाम सदा ऽस्तदोषा इति सुरैरुक्तो भगवान्मम दुष्करं चेद्युष्माभिः साहाय्यं कार्यं स्यान्न त्वेवमस्ति भूभारनिवारणादौ कर्त्रन्तरापेक्षया महत्यपि कार्ये मत्केशयोरपि शक्तत्वादिति । न तु केशमात्रावतार इति भ्रमितव्यम् । ततः क्षयमशेषास्ते दैतेया धारणीतले । प्रयास्यन्ति न संदेहो मद्दृक्पातविचूर्णिताः । कृष्णाष्टम्यामहमुत्पत्स्यामीत्यादिषु तत्रैव स्वावतारत्वोक्तिविरोधात् । कृष्णस्तु भगवान्स्वयमित्यादिपुराणान्तरविरोधाच्च । अजरामरेशस्यार्द्धपलितत्वासम्भवादेकः केश ईशेच्छया रामस्य श्वेतरूपतार्थं तदैव श्वेतो ऽभूदिति गम्यते । एतेनैतत्तुल्यं भारतवाक्यजातमपि व्याख्यातम् । तस्माद् ब्राह्मादौ मत्स्यादौ चांशत्वोक्तिरौपचारिकीति सिद्धम् । तत्रांशत्वं ब्रह्मादिष्वाविष्कृतोत्पत्त्यादिहेतुशक्तित्रयाल्पोत्पत्त्याद्येकैकहेतुशक्तित्वमेव न तु स्वांशित्वेनाभिमतानन्तशक्तिमायीशापेक्षया वस्तुतो ऽल्प-

शक्तित्वेनानीशत्वापत्त्या तदनन्तशक्तित्वबोधकानन्तवाक्याप्रामाण्यापत्तेः । तस्मात्त्रिगुणमायोपहित एक एवेशो विषवृक्षो ऽपि संवर्द्ध्य स्वयं छेत्तुमसांप्रतमिति न्यायात्तत्तदुपयोगितत्तद्गुणमादाय तत्तद्विग्रहावच्छेदेनोत्पत्त्याचैकैकं कर्म कुर्वन्ब्रह्मादिसंज्ञामात्रभेदेन व्यवह्रियतइति सिद्धम् । एवं मत्स्यादिष्वप्यवतार्यपेक्षया ऽऽविष्कृताल्पशक्तित्वमेवांशत्वव्यवहारहेतुः । अल्पशक्त्याविष्करणमप्यधिकाया अनुपयोगात् न त्वभावात् । यथा हि कश्चित्सर्वशास्त्रज्ञो बहून्देशान्विचरन्यत्र यद्विद्योपयोगं पश्यति तत्र तामेव प्रकटयंस्तद्व्यवहारभाग्भवति यत्र तु सर्वोपयोगात्सर्वाः प्रकटयति तत्र सर्वज्ञो ऽभिधीयते तथा प्रकृते ऽपि । एवं चान्ये ऽशकलाः पुंसः कृष्णस्तु भगवान्स्वयमिति भागवतं सङ्गच्छते । कृष्णावतारे विश्वरूपदर्शनाद्यनेकशक्त्याविष्करणात् । अन्यत्र तथा ऽभावात् । वस्तुतस्तु सर्वेषामप्यारोपितसर्वशक्तित्वाद्यनन्तकल्याणगुणाद्वितीयब्रह्मरूपत्वमेव । सर्वत्र चोक्तलक्षणमौपचारिकांशत्वमपि । ये त्वाहुः यस्मिन्नवतारे भगवतो विग्रहान्तरं नोपलभ्यते स पूर्णः । यत्रोपलभ्यते सो ऽश इति तेषामीशस्वरूपं किमभिमतमिति तु तएव प्रष्टव्याः । किं चैषां तत्तत्कार्येषु प्रवृत्तिलिङ्गेन रजोवच्छिन्नब्रह्मरूपत्वं दैत्याद्युपसंहारलिङ्गेन रुद्रत्वं तस्य पालने पर्यवसितत्वेन विष्णुत्वं च ज्ञेयम् । एतेन गुहगणेशयोर्हरिहराद्यवतारत्वबोधकवाक्यस्य रामस्य क्वचिच्छिवावतारत्वोक्तेः कृष्णस्य क्वचिच्छिवावतारत्वोक्तेः क्वचित्काल्यवतारत्वोक्तेश्च विरोधो ऽपास्तः । सर्वेषां सर्वावतारत्वोपगमेन प्रत्युत तेषां वाक्यानामनुकूलत्वात् । मत्स्यादेर्विष्णुत्वं प्रसिद्धं विधित्वं तु वैष्णवे ऽभिहितम् । सत्त्वोद्रिक्तस्तदा ब्रह्मा शून्यं लोकमवैक्षत । तोयान्तः स

महीं ज्ञात्वा जगत्येकार्णवे प्रभुः। अनुमानात्तदुद्धारं कर्त्तुकामः प्रजापतिः। अकरोत्स तनूमन्यां कल्पादिषु यथा पुरा। मत्स्यकूर्मादिकां तद्वद्वाराहं च पुरा स्थित इत्यादि। शिवसहस्रनामादिषु सर्वावतारनामोपलम्भात्तेषां रुद्रत्वनिश्चयः। प्रवृत्त्युपसंहारयोरपि पालने पर्यवसानेनास्य प्राधान्याद्विष्ण्वतारत्वव्यवहारप्राचुर्यम्। यत्तु भागवते विराजं प्रस्तुत्योक्तम्। एतन्नानावताराणां निधानं बीजमव्ययमिति तदपि तात्स्थ्यात्ताच्छब्द्यमिति न्यायात्तत्रत्यविराडुपपादकशब्दजातस्य तत्स्थान्तर्यामिपरत्वादविरुद्धम्। एते च लीलाविग्रहा अनन्ताः। नन्वीशस्य ब्रह्मादिसंज्ञा अपि रामादिसंज्ञावल्लीलाविग्रहमात्रकृता एव किं न स्युरिति चेन्न। चतुर्मुखादिविग्रहाणां प्रतिमहाकल्पभेदेनानन्त्याद्ब्रह्मादेरप्यानन्त्यापत्तेः। एतेनैक एवेशस्तत्तद्विग्रहावच्छिन्नो विष्णुशिवादिव्यपदेशभागिति तार्किकमतं निरस्तम्। एकैकस्यापि विग्रहबहुत्वस्मरणेन प्रतिकल्पं तद्भेदेनच तेषामपि मत्स्यादिवदानन्त्यापातात्। न चेष्टापत्तिः एको विष्णुरेको रुद्र इत्यादि श्रुतिविरोधात्। तस्मात्सत्त्वाद्यवच्छेदकृत एव विष्ण्वादिसंज्ञाभेदः। स च तत्तद्गुणकार्यतत्तत्क्रियाप्राधान्यविवक्षया तत्तद्विग्रहावच्छिन्ने ऽपीशे प्रवर्त्ततइत्येव साधु। यत्तु केचिन्मन्यन्ते विग्रहबोधकश्रुत्यादेरुपासनापरत्वादारोपितविग्रहेणाप्युपासनासिद्धेर्नेशस्योक्तविग्रहसिद्धिरिति। तन्न उपासनापरेभ्यो ऽप्यविरोधे देवताधिकरणन्यायात्प्रतीयमानार्थसिद्धेरनिवार्यत्वात्। न चापाणिपाद इति श्रुतिविरोधो ऽस्तीति वाच्यम्। निर्गुणश्रुतिविरोधात्सत्यकामादिगुणानामप्यनभ्युपगमापत्तेः। इष्टापत्तिरिति वदतां तु सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यतीति व्यतिहाराधि-

करणभाष्यविरोधः । मायिका गुणा वास्तवं निर्गुणत्वं न विघ्नन्तीति न्यायस्त्विहापि समः । यत्तु रूपोपन्यासाच्चेति सूत्रे विग्रहोपन्यासपरत्वेन सूत्रव्याख्यानानन्तरं ब्रह्मणो विग्रहाभावात्तद्व्याख्यानमयुक्तं मन्यमानानामन्यथा व्याख्यानमुपन्यस्तं भाष्यकारैस्तन्मुण्डकश्रुतौ निर्विशेषब्रह्मपरोपक्रमविरोधान्न विग्रहोपन्यासः संगच्छत इत्याशयेन । उक्तश्च तैरेवान्यत्र विग्रहसद्भावः स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थमिति । सूत्रकारेण च भोगमात्रसाम्यलिङ्गाच्चेत्यहंग्रहोपासकानां ब्रह्मणश्च भोगसाम्यं वदता स्पष्टीकृतम् । शरीरसापेक्षे वैषयिकानन्दे भोगशब्दप्रसिद्धेः । न च वाग्धेन्वादिवद्ध्यानारोपिता एव देहा इति शक्यं वक्तुम् छान्दोग्ये समानप्रकरणे गुणोपसंहारन्यायेनोपास्यब्रह्मण उदाहृतमत्रवर्णादिसिद्धवत्कारेण एष आत्माऽपहतपाप्मेत्यादिना देहित्वसाम्यात्प्रसक्तानां जरादीनां निषेधदर्शनात् । अन्यथाऽप्राप्तनिषेधापत्तेः । न च देहवदजरत्वादयोऽपि ध्यानपरिकल्पिताः तत्रैवास्मिन्कामाः समाहिता इत्यादिना तेषामनारोपितव्यावहारिकेशगुणत्वस्फुटीकरणात् । नन्वजरत्वादि न देहत्वेनोपास्यम् एष आत्मेत्यादिनाऽऽत्मगुणत्वोक्तेः । तद्गुणैः सत्यकामादिभिः सह पाठाच्च । यत्प्राये श्रूयते यच्च तत्ताद्वगवगम्यत इतिन्यायेनात्मगुणत्वसिद्धेः । तत्र तत्प्रसक्त्यभावेऽपि स्वतः सिद्धमेव तदुपास्यतया निर्गुणप्रकरणस्थाजरत्वादिवन्निर्दिश्यतइति चेन्न । सर्ववेदान्तप्रत्ययन्यायेन तत्र विशिष्टस्यैव ब्रह्मण उपास्यत्वे स्थिते औचित्यात् कोटिशो दृश्यमानोपबृंहणानुरोधाच्चाजरत्वादेर्विग्रहगुणत्वसिद्धेः । स्वधीकल्पितैर्न्यायैर्व्यवस्थापनादुपबृंहणानुरोधाद्व्यवस्थापनं ज्यायः विभे-

त्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति। इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्। वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि। ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्महात्मनामिति स्मृतेः। तथा च तस्योपरि शिवं ध्यायेत्साम्बं सर्वमनोहरम्। सर्वलक्षणसंपन्नं गाढयौवनशोभनमित्याद्युपबृंहणानुरोधाद्विग्रहगुणत्वेनैवान्वयो युक्तः। तथात्वेऽपि तद्द्वारा आत्मगुणत्वसम्भवेन तद्व्यपदेशस्य तद्गुणैः सह पाठस्य च त्रिलोचनं नीलकण्ठमित्यादाविवोपपत्तेः। पुराणैर्निर्णीते ऽर्थे संशयाद्ययोगाच्च। न च तेषामप्यर्थवादत्वं कल्प्यं पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः। तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हीत्यादितन्निन्दास्मरणात्। तस्माद्विग्रहगुणस्याजरत्वादेः स्वरूपतो विद्यमानत्वेन निर्दिश्योपास्यतया विधानेनानारोपितत्वाध्यवसायाद्धर्मिणो विग्रहस्याप्यनारोपितत्वं निश्चीयते। अतो ऽङ्गीकार्या एव मायिनो महेशस्य पूर्वोक्ताः शास्त्रसिद्धाः स्त्रीपुमाकारा विग्रहास्त्याज्या यवनानुयायिना।

एते च विग्रहा मायामात्रस्वरूपाः आकाशशरीरं ब्रह्मेति श्रुतेः। एषा माया मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसीति स्मृतेश्चेति केचित्।

अन्ये तु सर्गादिषु स्वयं भान्ति ब्रह्माद्या ये स्वयम्भुवः। विज्ञप्तिमात्रदेहास्ते सर्वात्मानः सदा स्थिता इत्यादिवासिष्ठादिवचांस्याश्रित्य चिन्मात्रस्वरूपा एव ते माया तु शुद्धचैतन्यस्य विग्रहाकारेण भाने निमित्तमित्याहुः।

अवतारा अपीदृशा बोध्याः। ननु सत्यसङ्कल्प ईशः किमिति नरतिर्यगादिभावेन युद्धैश्च क्लिश्यतीति चेत् भ-

क्ताभिध्यानाय मनोहराणि चरितानि तत्तद्रूपैर्विधत्ते। तद्रूपधारणमपीशस्य तादृगेव न त्ववतार्यवतारदेहेष्वणुरपि विशेषः क्लेशहेतुरस्ति। तदुक्तं शिवरहस्ये। जगद्रक्षायै त्वं नटसि ननु वामैव विभुतेति। नटसि नटवदाचरसि भैरवाद्यैर्मत्स्याद्यैश्चावतारैर्विहरसीत्यर्थः। स्कन्दश्च कृष्णं प्रस्तुत्याह स्कान्दे। कैवल्यं यत्परं ब्रह्म निराकारमगोचरम्। तच्च मूर्त्या परिणतं भक्तानां भक्तिहेतुत इति। अभियुक्तैश्चोक्तम्। परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तखेदखिन्नाः। विचिनुत भवनेषु वल्लवीनामुपनिषदर्थमुलूखले निबद्धमिति। युद्धमपीशस्यासुरोद्धारार्थमेव तदुक्तम्। मार्कण्डेये। दृष्ट्वैव किं न भवती प्रकरोति भस्म सर्वासुरानरिषु यत्प्रहिणोषि शस्त्रम्। लोकान्प्रयान्तु रिपवोपि हि शस्त्रपूता इत्थं मतिर्भवति तेष्वहितेषु साध्वीति। न च युद्धं तस्य क्लेशावहं किंतु क्रीडैव मोहादेस्तु नाश्यत्वं प्राङ्निवेदितं हरिवंशे च निकुम्भपरिघप्रहारान्मूर्छित इव कृष्णेऽभिहितं नूनमात्मेच्छया कृष्णस्तथा चक्रे सुरोत्तमः। को हि शक्तो महात्मानं युद्धे मोहयितुं हरिमिति। न चात्र त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशीत्यत्रेव नूनमित्युत्प्रेक्षायामिति भ्रमितव्यम्। यैस्तु भक्त्या स्मृता नूनं तेषामृद्धिः प्रजायतइत्यत्रेव निश्चयार्थत्वात्। किं चेशमायाया अचिन्त्यत्वेनातर्क्यत्वात्तन्मयानि चरितान्यप्यतर्क्याणि। नैषा तर्केण मतिरापनेयेति श्रुतेः। अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदिति वृद्धोक्तेश्च। तस्मादतर्क्येऽर्थे शास्त्रेणैव निर्णयः शास्त्राच्चैकमेवाद्वितीयं ब्रह्म स्वमायया हरिहराकारै रमोमाद्याकारैर्मत्स्यभैरवाद्याकारैश्च प्रतीयतइति निश्चीयते। अतोऽयमेवार्थः श्रद्धेय आस्तिकैः।

ननु हरादेरेकब्रह्मरूपत्वं चेत्तर्हि तत्तन्माहात्म्यपरपुराणादिष्वितरनिन्दा न स्यात् दृश्यते च सा तथा च तदन्यथानुपपत्त्या साम्यमपि दुर्लभम् ऐक्यस्य तु का कथा ततश्च पतन्तमनुधावतो बद्धो ऽपि गत इति न्यायापात इति चेदत्र केचिदाहुः । श्यालशुनकन्यायाद्भेदवादिनः कोपोत्पादाय तदिष्टदेवस्यान्यपरपुराणेष्वपकर्षवर्णनमिति ।

परे तु प्रागुक्तवचांस्याश्रित्य कल्पभेदेन स्वेच्छया परस्परस्माज्जन्मनिमित्तकं क्वचिदुत्कर्षापकर्षवर्णनमित्याहुः ।

न हि निन्दा निन्दितुं प्रवर्त्तते अपि तु विधेयं स्तोतुमिति न्यायाद्विधेयं हि स्तूयते वस्त्विति न्यायप्राप्ततत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्षवर्णनम् । तच्च यत्परः शब्द इति न्यायात्स्तुतिपरमेव न त्वन्यनिन्दापरमपि फलाभावात् उभयपरत्वे वाक्यभेदापत्तेश्च । अन्यत्रापि ह्येवं दृश्यते तद्यथा सर्वशाखाप्रत्ययमेकं कर्मेति न्यायान्नानाशाखाविहितमप्यग्निहोत्रं न भिद्यते इति स्थिते केचिदुदिते जुहोतीति श्रुतिमाश्रित्योदिते ऽर्के होमं कुर्वन्ति केचिदनुदिते जुहोतीति श्रुतिमवलम्ब्यानुदिते जुह्वति तत्र ये शाखिन उदिते जुह्वति ते उदयन्नु खलु वाआदित्य आहवनीयेन रश्मीन्संदधातीत्युपक्रम्य प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति यो ऽग्निहोत्रम् । दिवाकीर्त्यमदिवाकीर्त्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषामित्यनुदितहोमं निन्दन्ति । ये त्वनुदये जुह्वति ते आदित्यो वा अस्तं यन्नग्निमनु प्रविशतीति श्रुतिमुपजीव्य यदुदिते सूर्ये प्रातर्जुहुयाद्यथा ऽतिथये प्रद्रुताय शून्यायावसथायाहार्यं हरति तादृगेव तदित्युदित-

होमं निन्दन्ति। अनयोः स्वार्थतात्पर्यकल्पने रागप्राप्तसुरा-पानादिवत्कालद्वये ऽपि त्याज्यस्य शेषिणो होमस्यैव बाधः स्यात्तथा च यावज्जीवमग्निहोत्रं जुहुयादित्यादयश्चोदना उपरुध्येरन् । एवं च कालभेदेनाग्निहोत्रमिव गुणभेदेन विग्रहभेदेन वा नेशो भिद्यते । ततश्च य एकस्मिन्नीशे गुणा-दिभेदेन भेदं प्रकल्प्यैकविग्रहावच्छिन्नमुपासीनो ऽन्यं निन्दति स ईशविमुखः स्वामिद्रोहान्नरकमेतीति ज्ञेयम् । तस्मान्नैतावता सर्वविग्रहावच्छिन्नेशैकत्वविघातः शङ्क्य इत्यन्ये ।

ननूमादेर्बहुषु पुराणादिषु शक्तित्वोक्तेः कथमीशत्व-मिति चेत्तर्हि सेयं चैतन्यदीप्ता ब्रह्मविष्णुशिवरूपिणीत्या-दिश्रुतौ शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवादिका इत्या-दिपुराणे च ब्रह्मादीनामपि शक्तित्वोक्तेरीशत्वं न स्यात् । तेषामीशत्वबोधकशास्त्रात्तत्त्वमिति चेत्तदत्रापि तुल्यमिति न वयं पर्युनुयोज्याः। यत्रोभयोः समो दोषः परिहारो ऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणइति न्या-यात् । तथा च चित्प्राधान्यविवक्षायामीशत्वस्य उपा-धिप्राधान्यविवक्षायां शक्तित्वस्य उपाधेर्मिथ्यात्वेनात्य-न्तोपेक्षायां शुद्धचिन्मात्रत्वस्य च व्यपदेशः सर्वत्र समः । तस्मान्न कथमपि भेदलेशावकाशः। येषां तु धीमान्द्याद्भूयो भूयः श्रूयमाणो ऽप्यभेदो न बुद्धिमारोहति तैस्तूपवासाद्वरं भिक्षेतिन्यायेन भेदबुद्ध्या ऽपि स्वप्रेमास्पदविग्रहावच्छि-न्नेशाराधनं कार्यं तत्प्रसादान्मेधोदये शालिसमृद्धौ कोद्र-वाशनन्यायेन त्याज्या भेदधीः । भेदधिया तस्यापि किं-चित्पापं स्यात्तन्निन्दाश्रवणादिति चेत्तर्हि तदपि कूपखा-नकन्यायेनेशभक्तिजसुकृतैर्नाश्यते ।

वस्तुतस्तु भेदधीनिन्दा ये दुराग्रहेण तां न त्यजन्ति तद्विषया । ये ऽपास्तभेदधियो ऽपि भवान्तरीयभाववशेनैकविग्रहध्यानादावेव प्रवर्त्तन्ते ते तु न निन्द्या अनेकमूर्त्तिध्यानादेर्युगपत्कर्त्तुमशक्यत्वात् कालभेदेनानुष्ठाने चित्तस्थैर्यासिद्धेः । अन्यत्र प्रवृत्तस्य जन्मान्तरीयध्यानादिरूपचित्तवृत्तिप्रवाहस्य निम्नगाप्रवाहन्यायेनान्यत्र नयने ऽतिक्लेशाच्च । यथा ऽऽह श्रीहरिः पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशो ऽपि स इति । न चैवं भेदबुद्ध्यनुवृत्तिरपि स्यात् परमेश्वरप्रसादासादितशाब्ददैशिकपूर्वकाभेदधिया तन्निवृत्तेः । प्रत्यगभिन्नकमबुद्धौ सत्यां तु शते पञ्चाशदिति न्यायेनैतद्बाधस्याप्ययत्नसिद्धश्च । एकविग्रहविषयत्वनियमो ऽपि ध्यानादेरेव बाह्यपूजादि तु पञ्चाङ्गपूजादिविधिसामर्थ्यात्सर्वविषयं कार्यम् । यस्त्वनेकजन्मार्जितपापपुञ्जजन्यदुराग्रहादेकभक्तिच्छलेनान्यं निन्दति असकृद्बोध्यमानो ऽपि चर्जुमार्गेणाभेदं नोपैति भ्रामयति च मन्दान् स यादृशो यक्षस्तादृशो बलिरिति न्यायात्तत्प्रतिपादितोत्कर्षापकर्षविपरीतोत्कर्षापकर्षोपपादनेन विजित्य पश्चात्पूर्वोक्तरीत्या ऽऽत्यन्ताभेदोपपादनेन बोधनीयः । एवं हि स मारणाय गृहीतो ऽङ्गच्छेदं स्वीकरोतीति न्यायेनाभेदं स्वीकरिष्यति । स्वयं तु शिष्टैर्हरिहरादिभेदधीः सश्वमांसेव श्वपाकी दूरतस्त्याज्या ये तु दुराग्रहात्तां न त्यजन्ति ते नास्तिका एवेति दिक् ॥

श्रुतिस्मृतिपुराणादिसिद्धाभेदापमानिनः ।
ये ते चेदास्तिकास्तर्हि नास्तिका वद कीदृशाः ॥

आनन्दामृतसागरे सुमनसां ध्यानादिमन्थोद्भवः
प्रेमाख्यो हि हिमांशुराविरभवत्पुण्यौघरश्मिव्रजम् ।

स्वर्य्यस्मिन्ससुशैत्यसंचरवशात्सान्द्रत्वमापादय-
न्मन्ये तेन सुखाम्बुधिर्विजयते संप्राप्य मूर्त्तित्रयमिति॥

एकमेवाद्वितीयं, नेह नाना ऽऽस्ति किं चन, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते ऽथ तस्य भयं भवति, द्वितीयाद्वै भयं भवति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्यादिश्रुतयस्तु जीवेशयोर्जीवानां च परस्परमात्मानात्मनोरनात्मनां चान्योन्यभेदमपि वास्तवं न सहन्ते। नानेवेतीवशब्देन यो व्यावहारिकमपि नानात्वं पश्यति सो ऽप्यनर्थादनर्थान्तरमेति चेत्तर्हि वास्तवं तं पश्यतः का कथेति सूचितम्। तस्मात्तुच्छमेव द्रष्टव्यम्। तुच्छत्वबोधश्चैताभिः श्रुतिभिरेव भवति तदुक्तं तुच्छा ऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा। ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैरिति। परं तु वास्तवनानात्वभ्रमनिरासाय सोपानारोहणन्यायात्तत्तुच्छत्वबोधोदयाय च तदनिर्वचनीयत्वबोधकसत्तर्का अप्युपेयाः। न हि श्रुत्या ऽऽपि सकृदेव तुच्छत्वं बोधयितुं शक्यं जातो ऽपि वा बोधो न स्थिरीभवति अन्यथा मननविध्यानर्थक्यापत्तेः।

नन्वेकमेवाद्वितीयमिति कथमद्वैतं बोधयति यदि यदेकमेव तदद्वितीयं यदद्वितीयं तदेकमेव वा बोध्येतोभयथा ऽप्यप्रमाणमिदं वाक्यं स्यात् यदि यदद्वैतं तदद्वितीयमिति कल्पने तु माता मे वन्ध्येतिवत्केवलं वक्तुर्लज्जापादकमिदं वाक्यं स्यात्। उच्यते कार्यस्य हि द्वैतस्य कारणसत्तैव सत्ता। कारणं चास्य ब्रह्मैव सदेवेति पूर्ववाक्येन तथा ऽवधारणात्। वाक्यशेषेण च कारणस्य ब्रह्मणः सजातीयादिभेदनिरासेनाखण्डैकरसत्वं बोध्यते। नन्वेकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति न्यायेन प्रतिभय

ऽर्थसिद्ध्यभावान्नाद्वैतं साधयितुं मानमिति भेदवादिनो हि जीवेशाभेदमपि न क्षमन्ते ऽन्यस्य का कथा। तद्भेदे ऽपि किं मानमिति चेन्नाहमीश्वर इति प्रत्यक्षमित्यवेहि। नचेदं भ्रमः। अबाधात् अहमीश्वर इति प्रत्यक्षानुपलब्धेः माना-न्तरस्य तूपजीवकत्वेन बाधकत्वायोगादिति चेन्न। न ह्यात्म-नीशभेदप्रत्यक्षं सम्भवति हेत्वभावात् न हि बहिरिन्द्रियं तत्र हेतुः रूपादिरहितेशग्रहे ऽसमर्थस्यास्य तद्भेदग्रहे ऽप्य-समर्थत्वात्। नापि मनः। तस्य प्रमाणसहकारित्वेनालो-कादिवदप्रमाणत्वात्। न च परोत्प्रेक्षिते क्रमिककार्यजनके ऽणौ मनसि मानमप्यस्ति सर्वेन्द्रियेषु तत्तद्विषयसंबद्धेषु युगपदनेकबोधोदयस्य केषु चिन्मेधाविष्वनुभूयमानतया तदनुत्पत्तिरूपलिङ्गस्यासिद्धेः। शतपत्रपत्रशतभेदन्यायेन क्रमे सत्यप्यतिसूक्ष्मकालभेदस्य दुरवगाह्यतया तत्र यौग-पद्यप्रत्ययो भ्रम इति चेन्नबाधाभावात्। किञ्च प्रत्यक्षेणो-पलब्धुं योग्यस्य प्रतियोगिनो ऽनुपलम्भो योग्यानुपल-म्भः सो ऽभावरूपभेदग्राहकेन्द्रियस्य सहकारी वाच्यः। स च मनसेशभेदग्रहे न संभवति तत्प्रतियोगिन ईशस्य प्रत्यक्षायोग्यत्वात्। न च योग्यत्वमनुपलब्धेरेव विशेषणं तच्चानुपलब्धेस्तद्ग्राह्याभावप्रतियोगितद्व्याप्येतरसकलत-दुपलम्भककालिकत्वमेवेति वाच्यम्। प्रतियोगिप्रत्यक्ष-जनकस्य तदुपलम्भकपदाभिलप्यत्वात्तत्प्रत्यक्षस्याभावप्र-त्यक्षहेतुत्वापत्त्योक्तदोषानिस्तारेण घट्टकुटीप्रभातन्याया-पत्तेः। ननु यत्र यत्सत्त्वमनुपलम्भाविरोधि तत्र तदभावः प्रत्यक्षः ततश्च स्तम्भे पिशाचाभेदसत्त्वे स्तम्भाभेदवत्तस्या-प्युपलम्भापत्त्या ऽनुपलम्भविरोधित्वात्तदभावरूपः पि-शाचभेदः स्तम्भः पिशाचो न भवतीति यथा स्तम्भे प्रत्यक्ष-स्तथा जीवे ब्रह्माभेदसत्त्वे जीवाभेदवदनुपलम्भायोगात्तत्र

तदभावरूपो ब्रह्मभेदः प्रत्यक्ष इति चेन्न। साक्षादभावविरोधित्वं हि प्रतियोगिन एव अन्यस्य तु तद्व्याप्यत्वेनेति स्थितिः। तथा च प्रतियोगिसत्त्वस्यानुपलम्भविरोधित्वं तत्प्रतियोग्युपलम्भव्याप्यत्वेनैवेति वक्तव्यम् । एवं चान्यत्र प्रतियोगिसत्त्वस्याभावस्थलीयोपलम्भाव्याप्तत्वेन तत्रत्यानुपलम्भविरोधित्वायोगात् यत्र यत्सत्त्वमित्यादि वदता ऽभावाधिकरण एव प्रतियोगिसत्त्वं तदुपलम्भश्च वक्तव्यः। ततश्च नाभावधीसंभव इति वरघाताय कन्यावरणमिति न्यायापातः। यन्मनसा न मनुतइत्यादिश्रुतिनिषिद्धं चात्मनो मनोविषयत्वम्। औपनिषदत्वविशेषणेनापि चात्मनो मनोगम्यत्वं निषिध्यते सर्वं विशेषणं सावधारणमिति न्यायात्। यद्यपि यतो वाचो निवर्त्तन्तइत्यादिश्रुतेर्न शब्दशक्यं ब्रह्म तथा ऽप्यौपनिषदत्वश्रुतेर्वेदान्तप्रमाणकं तदिति निश्चीयते प्रमाणकृत्यं च तस्मिन्नज्ञाननिवृत्तिरेव नानधिगतार्थाधिगतिः स्वप्रभत्वात्तस्य। अज्ञानबाधश्च जीवेशाभेदविषयकतत्त्वमस्यादिवाक्यजबोधेन। तत्र हि तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते तच्च प्रकारान्तरेणाघटमानं लक्षणया प्रत्यग्ब्रह्मैक्ये वाक्यपर्यवसानं गमयति। तथा हि न तावद्धैश्वदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेन सामानाधिकरण्यं भिन्नार्थवाचकत्वात्। नाप्यजहत्स्वार्थयोर्विशेषणविशेष्यभावेन नीलमुत्पलमितिवद्युज्यते विरुद्धार्थयोस्तदयोगात्। न वा जहत्स्वार्थत्वेन संबन्धे लक्षणया कुसुमितद्रुमा गङ्गेतिवत्तदुपपत्तिः। एकार्थत्वस्य विवक्षितत्वात् । अतो जहदजहल्लक्षणया विरुद्धांशत्यागेनानुगतचिदंशोपादानेन चैक्यएव पर्यवसानम्। लक्षणा च न पदमात्रवृत्तिः किं तु वाक्यवृत्तिरपि यथा गम्भीरायां नद्यां घोष इत्यत्र पदद्वयस्य तीरे शक्तया

पदसंबन्धेन यज्ज्ञाप्यते तत्संबन्धो लक्षणा शक्तिज्ञाप्यश्च यथा पदार्थस्तथा वाक्यार्थो ऽपीति न का चिदनुपपत्तिः। अत एव विध्यपेक्षितप्राशस्त्यप्रत्यायकतया ऽर्थवादपदानां पदस्थानीयतया विधिवाक्येनैकवाक्यता भवतीत्यर्थवादवाक्यानां पदैकवाक्यता। यत्र तु प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वं तत्र नष्टाश्वदग्धरथन्यायेनान्योन्याकाङ्क्षिताङ्गाङ्गिभावबोधकतया वाक्यैकवाक्यता यथा दर्शपूर्णमासाभ्यामित्यादेः समिधो यजतीत्यादेश्च। तदुक्तं भट्टपादैः। स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायतइति। प्रकृतमनुसरामः।

तस्माद्वाक्ये ऽपि लक्षणासंभवाद्वेदान्तानां लक्षणया निर्विशेषब्रह्मप्रतिपादकत्वान्न श्रुतिविरोधः। मनसस्तु न लक्षणादिकं सम्भवति शब्दवृत्तित्वात्तस्य। नाहमीश इत्यनुभवस्त्वविद्यावृत्तिरूपो भ्रम एव सविशेषणे हि वर्त्तमानौ विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसंक्रामत इति न्यायेनोपाधिभेदविषयो बोध्यः विशेष्यांशे च श्रौतो बाध उक्त एव। न चानुभवेन श्रुतेर्बाधः शङ्क्यः श्रुतेर्निरवकाशत्वात् निरवकाशस्य च सावकाशनिरवकाशयोर्निरवकाशो बलीयानिति न्यायाद्बाधकत्वोपपत्तेः। ननु जीवेशयोः क चिद्भेदः क चिचाभेदो निर्दिश्यते। तथा च यद्यभेद एव गृह्येत तदा भेदनिर्देशो निरालम्बनः स्यात् न चैतद्युक्तम्। तस्मादहिकुण्डलन्यायेन जीवेशभेदश्रुती सयोस्तात्त्विकत्वमुपेत्यैव व्याख्येये यथैकस्याहेरहित्वेनाभेदस्तस्यैव कुण्डलावस्थस्य प्रांशुत्वावस्थाद्भेदश्च तात्त्विकः। एवं ब्रह्मणो ऽपि चैतन्यरूपेणाभेदः जीवत्वेश्वरत्वरूपेण भेदश्च तात्त्विक इति। यद्वा जीवचैतन्यमीशचैतन्यं च वस्तु

तो भिन्नमेवास्तु अभेदनिर्देशस्तु प्रकाशाश्रयन्यायेन चैतन्यरूपत्वसाजात्येन द्रष्टव्यः । यथा रवेस्तदाश्रितप्रभारूपद्रव्यस्य च सत्यपि भेदे तेजस्त्वरूपसाजात्येनाभेदनिर्देश इति चेन्न। तात्त्विकभेदावलम्बिनोः पक्षयोः श्रुत्यादिविरुद्धत्वात् । भेदश्रुतिस्त्वनृतभेदेनाप्युपपद्यते । एतेन श्रुतेर्भेदे प्रमाणत्वं निरस्तम् । अत एवार्थापत्तिरपि न तत्र मानम् । तात्त्विकभेदादृते ऽनुपपन्नार्थाभावात् विरुद्धधर्माक्रान्तत्वहेतोस्तु भेदसिद्धेः प्रागसिद्धिरेव । ननु श्रुतित्वसाम्ये ऽद्वैतश्रुतेरेव कुतः प्राबल्यमिति चेत्तात्पर्यवत्त्वादित्यवेहि । तदपि कुत इति चेदुपक्रमोपसंहारावभ्यासो ऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इत्यभियुक्तप्रसिद्धतात्पर्यलिङ्गैरिति गृहाण। तत्र सदेवेत्युपक्रम्यैतदात्म्यमिदं सर्वमित्युपसंहरति इदमुपक्रमोपसंहारैकरूप्यं तात्पर्यलिङ्गम् । तथा तत्त्वमसीति नवकृत्वो ऽभ्यासः । रूपादिहीनाद्वितीयब्रह्मणः परिनिष्ठितरूपत्वे ऽपि मानान्तरायोग्यत्वादपूर्वत्वमुक्तम् । अत्र वाव किल सत्सोम्य न निभालयसइति संघाते स्थितं प्रत्यग्ब्रह्म न जानासीत्यर्थः तस्य तावदेव चिरमित्यादि ब्रह्मबोधात्फलमुक्तम् । अनेन जीवेनात्मनेत्याद्यद्वितीयज्ञानार्थो ऽर्थवादः । मृदादिदृष्टान्तैः प्रकृत्यतिरेकेण विकारो नास्तीत्युपपत्तिरुक्ता एवं षड्विधानि तात्पर्यलिङ्गानि व्यस्तानि समस्तानि च प्रतिवेदान्तं दृश्यन्ते ॥

ननु द्वा सुपर्णेत्यादि भेदे ऽप्यस्ति मानम् उपक्रमादयो ऽपि तत्र सन्तीति कथमभेद एव तात्पर्यम् । तथा हि । द्वा सुपर्णेत्युपक्रमः परमं साम्यमुपैतीत्युपसंहारः तयोरन्यः अनश्नन्नन्यः अन्यमीशमित्यभ्यासः ईशस्यापूर्वत्वात्तद्भेदो ऽप्यपूर्वः पुण्यपापे विधूयेति फलम् अस्य

महिमानमित्यर्थवादः। अनश्नन्नित्युपपत्तिः। अत्र द्वित्वं साम्यं च भेदव्याप्यम् अभ्यासे तु कण्ठोक्त एव भेद इति। उच्यते कस्मिन्नु भगवो विज्ञातइति परमोपक्रमे ऽभेदस्यैव प्रक्रान्तत्वान्नायमुपक्रमः। नापि द्वित्वं भेदव्याप्यं रामकृष्णावित्यादौ तथा ऽनुपगमात्। परममिति विशेषणादुपसंहारो ऽपि न भेदपरः अभ्यासस्त्वतात्त्विकभेदपरः। ईशो ऽपि सामान्यतो ऽनुमितो भेदप्रतियोगीति नापूर्वो ऽस्य भेदः। फलार्थवादौ त्वस्माकमपि न प्रतिकूलाविति भेदे तात्पर्यलिङ्गाभावान्न भेदे वेदतात्पर्यम्। अस्ति चाभेदे तत्सत्त्वात्। तथा चोपपन्नमभेदश्रुतेः प्राबल्यम्। पूर्वकाण्डस्यापि परम्परया ब्रह्मपरत्वं स्वर्गादिफलप्रदर्शनं तदक्षय्यत्वादिप्रदर्शनं च गुडजिह्विकान्यायेनाज्ञतोषार्थं यत्कृतकं तदनित्यमितिन्यायेनानित्ये तत्र श्रुतितात्पर्यायोगादित्यलं विस्तरैः।

जीवानामन्योन्यतात्त्विकभेद एकेनेशेनाभेदासम्भवादेषामप्यभेदः। सुखदुःखादिव्यवस्था तु कल्पितभेदेनाप्युपपद्यते। प्रत्युत विभ्वनेकात्मवादएव तदनुपपत्तिः। एतच्चोष्ट्रलगुडन्याये स्पष्टीभविष्यतीत्युपरम्यते। अनात्मनामपि चिदात्मनि रज्जौ स्रगादिवत्कल्पितत्वेन न ततो भिन्नत्वं संभवति। नन्वेवमपि नाद्वैतसिद्धिः। अन्योन्यानात्मभेदस्य न हि दृष्टे ऽनुपपन्नं नामेति न्यायेन जागरूकत्वात् तथा च भक्षिते ऽपि लशुने न शान्तो व्याधिरिति न्यायापात इति चेन्न दृष्टत्वस्यासिद्धेः। दृश्यतएव सर्वभिन्नो घट इति चेन्न न हि घटे सर्वभेदप्रत्यक्षं संभवति भेदग्रहे प्रतियोगिग्रहस्य हेतुत्वात् सर्वस्य चासर्वज्ञेन ज्ञातुमशक्यत्वात्। ततश्च सर्वभिन्नो घट इति प्रत्यक्षं भ्रमः अनुमानादेस्तु पूर्वोक्तैव गतिरित्येकस्यैव ब्रह्मणो रज्जुस-

र्पन्यायेनाज्ञातस्य प्रपञ्चाकारेण भानान्नाद्वैतश्रुतिर्मानान्तरविरुद्धा ज्ञातस्य च निर्विशेषत्वेन भानान्न प्रपञ्चोपशमत्वश्रवणमपि विरुद्धमिति संक्षेपः ।

एवं हि सर्वदोषसमाधानान्नापसिद्धान्तो न वा प्रकृतन्यायोदाहरणासंगतिः ये ऽपीशे केवलनिमित्तकारणत्ववादिनो न तैरपि विरोधः । उभयविधकारणत्ववत्ति केवलनिमित्तत्वस्यापि सत्त्वात् । न च केवलनिमित्तत्वं नामोपादानत्वाभावसमानाधिकरणनिमित्तत्वं तच्च त्वदभिमतईशे नास्ति तथा च विरोध इति शङ्क्यम् । ब्रह्मण्युपादानत्वस्य कल्पितत्वाङ्गीकारेण वास्तवतदभावस्यापि सत्त्वात् तस्मात्सर्वं निरवद्यम् । इति वृत्तप्रकम्पनन्यायः ८ । ४५ ।

अथात्रत्याः प्रासङ्गिकास्तत्सङ्गताश्च लिख्यन्ते । क्रिया हि विकल्प्यते न वस्त्विवति न्या० ५ । ४६ ।

यः कारयति स करोत्येवेति न्या० । राजादिर्हि भृत्यैर्युद्धादिकं कारयन्स्वयमपि करोतीति प्रसिद्धम् । ४७ ।

ज्ञानादेर्निष्कर्षवदुत्कर्षो ऽप्यङ्गीकार्यो बाधकाभावादिति न्या० । यथा ज्ञानापकर्षावसानभूमित्वं स्थावराणां तथा तदुत्कर्षावसानभूमित्वमीशस्येत्यङ्गीकार्यं तच्चोत्कृष्टत्वं ज्ञानस्य सर्वविषयत्वमेवेति भावः ३ । ४८ ।

काकतालीयन्या० । अत्र काकतालशब्दौ समासविषये काकतालसमवेतक्रियावर्त्तिनौ । तेन काकागमनमिव तालपतनमिव काकतालमिति समासाच्च तद्विषयादिति ज्ञापकादिवार्थे समासः । इवार्थे समासाभावे तद्विषयादित्यनेनेवार्थविषयसमासानुवादस्यानुपपन्नत्वात्तज्ज्ञापकत्वम् । तत्र काकागमनमुपमेयं विधेः क चिद्गमनं

तालपतने तु तत्रैव हरेरवस्थानम्। तेन च काकतालसमवेतक्रियापरयोः काकतालपदयोरिवार्थे समासेन विधेर्हरेश्च समागमः काकतालसमागमसदृश इति फलति। काकागमनतालपतनयोरुपमानत्वे तदुपमेययोर्विधिगमनहर्यवस्थानयोः पृथगनुपात्तत्वेनान्वयायोगात् काकतालसमागम एवोपमानम्। एवं च काकतालसमागमसदृशं काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे समासाच्च तद्विषयादिति सूत्रेण इवे प्रतिकृताविव्यधिकारस्थेन छप्रत्ययः तस्य ब्रह्मविष्णवोः समागमानन्तरं जातो वादिप्रतिवादिभावः काकतालफलयोर्भोक्तृभोग्यभावसदृश इत्यर्थः। न च सकृदुच्चरिताभ्यां काकतालपदाभ्यां कथमुपमाद्वयावबोध इति शक्यम्। अनुभवानुसार्यनुशासनेन व्युत्पत्तिवैचित्र्यस्य स्फुटप्रतिपत्तेरिति।

अजाकृपाणीयन्यायो ऽपीदृशः अत्रापि ह्यजाकृपाणपदाभ्यां तदागमनपतने लक्ष्येते एवमन्यदपि सर्वं तुल्यमेव। एतावांस्तु विशेषः। यत्सो ऽवितर्कितेष्टलाभे ऽनिष्टलाभे चावतरति अकस्मान्महाफलस्याग्रे पतने काकस्य भोगलाभवच्छिरसि पतने मरणस्यापि सम्भवात् अयं त्वकस्मात्केवलानिष्टावाप्तौ प्रवर्त्ततइति। ५। ५०।

न हि भिक्षुको भिक्षुकमिति न्यायः स्पष्टः। ६। ५१।

योजनप्राप्यायां कावेर्यां मल्लबन्धनन्या०।

कावेर्याख्यायां नद्यां योजनेन योजनचलनेन प्राप्यायां मल्लस्य कैवर्त्तस्य बन्धनं यथा न युज्यते तथा प्रकृते ऽपीत्यर्थः। के चित् मल्लो बाहुयुद्धकुशलस्तद्वदधोलम्बितवाससां कटौ बन्धनं मल्लबन्धनं तद्यथा योजनप्राप्यायां तस्यामयुक्तं तथेत्यन्ये। ७। ५२।

अवश्यापेक्षितानपेक्षितयोरिति न्या० । ८ । ५३ ।

कृताकृतप्रसङ्गी यो विधिः स नित्य इति न्या० । यथा रन्धयतीत्यत्र रधिजभोरचीति नुम्विधिरत उपधाया इति वृद्धौ कृतायामकृतायां च प्रसङ्गितया नित्यत्वेन बलीयस्त्वाद्वृद्धिविधेर्बाधकस्तथा गणेशाराधनविधिरन्याराधनविधेर्बाधक इति गाणपतानामभिमानः । ९ । ५४ ।

अनधीते महाभाष्यइति न्या० । १० । ५५ ।

एकफलाकाङ्क्षायां तदाराधनमन्यदपि फलं प्रयच्छतीति विवक्षायां तु फलवत्सहकारन्यायः यथा सहकारः आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभइत्यभिधानादतिसौरभ आम्रवृक्षोऽतिमधुरपक्वफलनमितशाखः स्वमुपसन्नाय छायार्थिने जनाय फलं परिमलं चाप्रार्थितमपि ददाति तथा प्रकृतेऽपीत्यर्थः । ११ । ५६ ।

तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्या० । १२ । ५७ ।

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्या० । १३ । ५८ ।

केवलमानेनार्थसिद्धिविवक्षायां मानाधीना मेयसिद्धिरिति न्यायः प्रवर्त्तते । १४ । ५९ ।

यद्विवाहसङ्गीतगानमिति न्या० केचित्तु प्रागुदाहृतं वरगोष्ठीन्यायमेतदर्थकत्वेन व्याचक्षते । १५ । ६० ।

अन्धगजन्या० अन्धैर्निर्धारितो गजोऽन्धगजस्तस्य न्याय इति मध्यमपदलोपिगर्भः षष्ठीतत्पुरुषः । यथा हि लोके श्रूयते जन्मान्धा बहवः कंचिदनन्धं पुरुषमूचुरस्मान् गजं दर्शयेति । स च गजशालायां तान्नीत्वा तं तं गजावयवं तेन तेन ग्राहयित्वा चोवाचायं गज इति । ते च तं तमवयवमेव गजत्वेन निश्चित्य स्वस्थानमागताः परस्परं कलहं चक्रुः । शूर्पसदृशो गज इति कर्णस्पर्शी । महा-

सर्पसदृश इति शुण्डाग्राही। स्तम्भतुल्य इति जङ्घाग्रहीता। पुच्छग्राहकस्तु स्थूलरज्जुसमो गज इत्युवाचेति। तथा शास्त्राभिप्रायानभिज्ञा वादिनोऽपि स्वस्वेष्टदेवमाहात्म्यबोधकानि वाक्यानि पश्यन्त इतराणि तु पश्यन्तोऽप्यपश्यन्त इव सर्वमाहात्म्यबोधकवाक्यैकवाक्यतां चाजानन्तोऽन्योन्यं विवदन्त इत्यर्थः। एवमेव स्थूलारुन्धतीन्याये प्रदर्शितान्वाक्याभासानाश्रित्य तत्तात्पर्यानभिज्ञाश्चार्वाकादयो माध्यमिकान्तास्त्वंपदार्थविषये विवदन्त इति बोध्यम्। १६। ६१।

कूपमण्डूकन्या०। समुद्रमण्डूकः कथं चित्तत्तीरसमीपस्थकूपे प्रविष्टस्तं दृष्ट्वा कूपमण्डूकवर्यो ऽदृष्टचरो ऽयमिति ज्ञात्वा पप्रच्छ कुत आगतो भवानिति। समुद्रादिति वचनं श्रुत्वा कियान्स इति पृष्टवान् महानिति तेन प्रत्युक्तः। स्वजङ्घां प्रसार्य किमेतावानित्युवाच। न हि महत्तमः स इति प्रतिवचनमाकर्ण्य द्वितीयजङ्घां प्रसार्य तर्ह्येतावान्भविष्यतीत्युवाच पुनरपि तेन निराकृतस्तृतीयां तुरीयां जङ्घां प्रसार्याप्लुत्य च क्रमेण प्रादेशवितस्तिहस्तपरिमितं देशं किमेतावानिति पृच्छंस्तेन निरस्तश्चेत्तर्हि कूपसदृशो भविष्यतीत्युवाच। भूयोऽपि भ्रातर्नास्ति तत्तुल्योऽन्यः स हि सरितां पतिरनवगाह्यगाम्भीर्यो ऽलक्ष्यपारावारो ऽतीव महत्तम इति तेन प्रत्युक्तस्तर्हि नास्त्येव स यः कूपादपि महान् त्वं तु मिथ्यैव प्रलपसीति तं निराचक्रे। स च स्वमनसि तं हसितवानिति गाथा लोके गीयते तथा च यथाऽम्भोनिधिमज्ञात्वा निराकुर्वन्कूपमण्डूक उपहास्यतां प्राप्तस्तथाऽन्यमतानभिज्ञस्तद्दूषणपर उपहासास्पदीभवतीति न्यायसङ्गतिः। १७। ६२।

तत्त्ववित्त्वाभिमानी मूढो न तद्गतिं वाञ्छन्नपि

लभते उपहसनीयश्च भवतीति विवक्षायां चतुर्वेदविन्नया-
यो ऽवतरति । यथा गोहिरण्यादिरूपं बहुधनं चतुर्वेदविदे
देयमस्तीति कस्य चिद्दातुर्वचनं श्रुत्वा मुग्धः कश्चिद्वेदाश्च-
त्वार इत्यहं जाने मह्यमिदं देयमिति वदन्न तल्लेभे उपहा-
स्यतां च प्राप्तस्तथा यः सच्चिदानन्दरूपं प्रत्यगभिन्नं ब्रह्मे-
त्यादिशब्दाभिज्ञस्तदर्थाभिज्ञो वा तत्त्ववित्त्वाभिमानेन
तद्गतिमिच्छति न स तामेति उपहसनीयश्च भवतीति
ज्ञेयम् । १८ । ६३ ।

नृपनापितपुत्रन्या० । इत्थं हि लौकिकी गाथा कस्य
चिन्नृपस्य भृत्यो नापितः कश्चित्प्रातः सर्वं पुरमन्विष्या-
तीव रम्यो बालो मे दर्शनाय त्वयात्रानेय इति नृपेणाज्ञप्तः
प्रातरुत्थायाखिलपुरमन्विष्य दृष्ट्वा ऽपि च तत्र तत्राति-
रम्यान्बालान्स्वपुत्रतुल्यानमत्वा तमेव राजवेश्मनि नी-
त्वा राज्ञे निवेदयामास स्वामिन्नानीतो ऽयं रम्यतमो बाल
इति । राजा च तमुपशान्तानलाङ्गाराभं काणं खल्वाटं
कृशह्रस्वबाहुजङ्घं स्थूललम्बोदरं दृष्ट्वोपहासमयं खलः कृत-
वान्मयीति मत्वा चुकोप उवाच च अरे जाल्म किमि-
दमिति । नापितश्च कुपितं नृपं ज्ञात्वा कृताञ्जलिर्भूत्वो-
वाच राजेन्द्रमौले तव चरणमुपालभे नायमुपहासः किं-
तु मे मनसीत्थमेव निश्चयो नास्तीदृक् त्रिलोक्यां तव पुर्या-
स्तु का कथेति । राजा च सत्यमादृश्येव रागग्रहगृहीतचि-
त्तदशेति मत्वा कोपं तत्याजेति । तथा च यथा ऽतिकुरूपे
ऽपि पुत्रे रागातिशयवशान्नापितस्य सर्वोत्तमत्वधीस्तथा
मन्दधियां केषां चिज्जन्मान्तरीयसंस्कारप्रयुक्तरागातिशय-
वशात्कस्मिंश्चिदतिक्षुद्रे ऽपि देवे सर्वोत्तमत्वधीः । परित्य-
ज्य च हरिहरादींस्तदुपासने प्रवृत्तिरिति न्यायसङ्गतिः ।
१९ । ६४ ।

स्वशिश्नमपि चुम्बन्तमिति न्या० । २० । ६५ ।

महीषीप्रसवैान्मुख्य इति न्या० । २१ । ६६ ।

अन्धचटकन्या० । यथा ऽकस्मादन्धस्य हस्ते पतितश्चटको ऽन्धेन गृहीत इति लोके प्रसिद्धिमगात्तथा दैवाल्लब्धमभीष्टं स्वेष्टदेवत्वेनाभिमतवंशार्कादिदत्तं मन्यन्तइत्यर्थः । २२ । ६७ ।

घुणाक्षरन्यायो ऽपीदृशः घुणेन भक्षिते काष्ठादावकस्मात्ककारादिसदृशच्छिद्रेषु सत्सु घुणेनाक्षराणि निर्मितानीत्यबुधैः कल्प्यते यथा तथा प्रकृते ऽपि २३ । ६८ ।

पुत्रलिप्सया देवं भजन्त्या भर्त्ता ऽपि नष्ट इति न्या० । २४ । ६९ ।

वृद्धिमिष्टवतो मूलं विनष्टमिति न्या० । २५ । ७० ।

चर्मतन्तौ महिषीं हन्तीति न्या० । सप्तमीह निमित्ते निमित्तं च फलं तथा च चर्मतन्त्वर्थमित्यर्थः स्पष्टमन्यत् । २६ । ७१ ।

मण्डूकतोलनन्या० । केषु चिन्मण्डूकेष्वभीष्टमानपूरणार्थं तुलायामारोपितेष्वन्ये उत्प्लुत्य गच्छन्तीति नाभीष्टसिद्धिस्तथा प्रकृते ऽपि २७ । ७२ ।

सच्छिद्रघटाम्बुन्यायः २८ । ७३ ।

एकामसिद्धिं परिहरतो द्वितीया ऽऽपद्यतइति न्यायो ऽपि चेह प्रवर्त्तते । इयं बौद्धधिकारे उदयनाचार्योक्तिः । यथाङ्कुराद्यकर्तृकं शरीरजन्यत्वादित्यत्र शरीरीति विशेषणेन स्वरूपासिद्धिं परिहरतो बौद्धस्य व्याप्यत्वासिद्धिरापद्यपते तथा प्रकृते ऽपि २९ । ७४ ।

उपयन्नपयन्धर्मो विकरोति हि धर्मिणमिति न्या० । यथा पूर्वस्य रूपरसादिरूपधर्मस्य परावृत्तौ च रूपरसाद्य-

न्तरोत्पत्तौ च तण्डुलादेर्धर्मिणो विकृतिर्दृश्यते तथा प्रकृते ऽपि स्यादित्यर्थः ३० । ७५ ।

व्रणं शिशमयिषोः शस्त्रग्रहणन्या० स्वस्थाने स्पष्टो ऽयम् । ३१ । ७६ ।

सर्वं विशेषणं सावधारणमिति न्या० शङ्खः श्वेत इत्यत्र श्वेत एवेत्यर्थः एवमन्यत्र प्रकृते ऽपि च ॥ ३२ । ७७ ।

सर्वं वाक्यं साधारणमिति न्यायो ऽपि कैश्चनोदाह्रियते । तत्रावधारणार्थक एवकारस्त्रिविधः क्रियान्वितो विशेषणान्वितो विशेष्यान्वितश्च । तत्र पूर्वस्यात्यन्तायोगव्यवच्छेदो ऽर्थः यथा नीलं पद्मं भवत्येव । द्वितीयस्यायोगव्यवच्छेदः स चोक्तः । तृतीयस्यान्ययोगव्यवच्छेदः यथा पार्थ एव धनुर्धर इत्यादौ एवमन्यत्रापि बोध्यम् । ३३ । ७८ ।

वृद्धकुमारीवाक्यन्या० । अयं महभाष्ये व्याख्यातः । तद्यथा वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्वेति सा च वरमवृणीत पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति । न च तावदस्याः पतिर्भवति कुतः पुत्राः कुतो गावः कुतो धान्यम् । तत्रानया एकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं संगृहीतं भवतीति तथा तत्तदुपासनया मोक्षबोधकवाक्यैरपि यदन्तरेण तदसिद्धिस्तत्संगृहीतं भवति । एवं काशीमरणान्मुक्तिरिति श्रुतिवाक्यं तदुपबृंहणभूतानि पुराणादिवाक्यानि च यानि काशीमरणान्मोक्षं बोधयन्ति तेषां यथाश्रुतार्थोपगमे तमेव विदित्वा ऽति मृत्युमेति नान्यः पन्था विद्यते ऽयनायेत्यादिवचनविरोधः स्यात्तद्वारणाय तत्त्वज्ञानद्वारैव मोक्ष इत्यङ्गीक्रियते । तच्च ज्ञानं ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । ब्राह्मणो निर्वेद-

मायान्नास्त्यकृतः कृतेन शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वा ऽऽत्मन्येवात्मानं पश्येत्, आत्मा वा अरे द्रष्टव्यः श्रोतव्यः, नावेदविन्मनुते तं बृहन्तम्, आचार्यवान् पुरुषो वेद, प्रोक्तो ऽन्येनैव सुज्ञानाय प्रेष्ठेत्यादिशास्त्रप्रामाण्यादनेकजन्मार्जितपुण्यपुञ्जक्षपितपापस्य साधनचतुष्टयसंपन्नस्य गुर्वधीतवेदान्तश्रवणादिमत एव नान्यस्य। ततश्च काशीमरणान्मोक्षबोधकवाक्यजातेन यदन्तरेण मोक्षासिद्धिस्तत्सर्वमनेन न्यायेन संगृहीतं भवति। न चैतत्सर्वमत्र कल्प्यं किं तु मानसिद्धम्। तत्र तावत्पापनिवृत्तौ काशीप्रवेशदर्शनस्पर्शनैः तत्रत्यगङ्गादिस्नानदेवदर्शनादिना च तन्निवृत्तिबोधकानि वचनानि प्रमाणम्। तत्र काशीदर्शनमाहात्म्यं काशीखण्डे ऽभिहितम्। यैर्दृष्टा दूरतः काशी ते पुण्याः पापशत्रवः। स्पृष्टा यैस्ते ऽपि च ततः श्रेष्ठा मोक्षैकभाजनम्। मात्स्ये च अज्ञानाज्ज्ञानतो वा ऽपि वर्त्तमानमतीतकम्। सर्वं तस्य च तत्पापं क्षेत्रं दृष्ट्वा विनश्यति। पाद्मे। अस्याः संदर्शनं व्यास सर्वपातकनाशनम्। अस्या निवासो निर्वाणं साधयत्यञ्जसा मुने। ब्रह्मवैवर्त्ते। पश्य तात परमर्चितां पुरीं योगिभिः सुकृतिभिर्मुनीश्वरैः। यां निरीक्ष्य पुरुषः पुरा कृतैः पातकैः शरमितैर्वियुज्यते। पञ्चमहापातकैरित्यर्थः। तथा बहिः कृतानि पापानि पूर्वजन्मार्जितान्यपि। काशीदर्शमात्रेण नाशमेष्यन्ति नान्यथा अत्र बहिः कृतानीति निर्देशात्पूर्ववाक्यान्यप्येतद्विषयाण्युपसंह्रियन्ते चतुर्धाकरणवाक्यानीवाग्नेयविषयत्वेन। अन्यथा पञ्चक्रोशयात्रादिविधानं व्यर्थं स्यात् तथा पूर्वजन्मशतकोटिसंचितं पापराशिमतुलं विनाशयेत्। काशिका परपदप्रकाशिका दर्शनश्रवणकीर्त्तनादिभिः। एवमन्येष्वपि पुराणादिषु द्रष्टव्यम्। अथ काशीप्रवेशमहिमा ब्रह्म-

वैवर्त्ते । महापातकयुक्तो ऽपि श्रद्धया रहितो ऽपि वा । काशीप्रवेशादनघः सम्यक् स्थित्वा सुखी भवेत् । यत्तु कश्चिदाह । काशीप्रवेशात्पापं न नश्यति किं तु बहिरेव तिष्ठति एतदेवानघत्वं नाम अत एव लिङ्गपुराणे वाराणस्यां तु यः कश्चित्प्रविष्टो ब्रह्मघातकः । तिष्ठते बाह्यतः पापं निर्गते गृह्यते पुनरित्युक्तम् । एवमन्यान्यपि पुराणवाक्यानि बोध्यानीति तन्न क्षोदक्षमम् । अदृष्टरूपस्य तस्यान्तःकरणधर्मत्वेन बहिर्निराश्रयावस्थानायोगात् । अथ तार्किकमतमाश्रित्यादृष्टस्यात्मधर्मत्वमुपेत्य पापं प्राक् देहावच्छिन्ने स्थितमिदानीं तु विभुत्वादात्मनो बहिरवच्छिन्ने तस्मिंस्तिष्ठति न तु काश्यवच्छिन्नइति मन्यसे न तदपि चारु । तस्य देशावच्छेदेन वृत्त्यभावात् । अन्यथा ऽऽत्मगुणस्यास्याश्रयगमनं विना ऽन्यत्र गमनासम्भवेनात्र नरदेहावच्छिन्ने जातस्यादृष्टस्य स्वर्गादौ देवादिदेहे भोगानुत्पादकत्वप्रसङ्गात् । किं च यदि प्रागेव बहिरवच्छिन्ने जातं पापं न काश्यवच्छिन्ने तर्हि काशीप्रवेशेन किमधिकं कृतम् । अतः स्वार्थासम्भवाद्बहिः पापस्थितिबोधकानि वाक्यानि बहिर्न गन्तव्यं किं त्वत्रैव सदा स्थेयमित्येवंपराणि निर्गते गृह्यते पुनरिति तु न हि निन्दा निन्दितुं प्रवर्त्तत इति न्यायेन बहिर्न यायादिति स्फुटमेवाह । किंच बहूनि वाक्यानि पापनाशमेवोपपादयन्ति तत्र तावच्छैवे । अत्र प्रविष्टमात्रस्य जन्तोः पापं पुरा ऽर्जितम् । विनाशमाप्नोति परं पुण्यराशिश्च वर्द्धते । लैङ्गे च जन्मान्तरसहस्रेण यत्पापं पूर्वसंचितम् । अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् । एवमन्यान्यपि बोध्यानि । अत्र काशीदर्शनादिभिः पापसामान्यध्वंसश्रवणे ऽप्यारब्धातिरिक्तस्यैव पापस्य ध्वंसो द्रष्टव्यः । तत्त्वज्ञानेनापि तद्ध्वंसानभ्युपगमात् । इदं त्वत्र

विचारणीयं किं काशीप्रवेशादिना ऽतीताशेषजन्मजं पापं लीयऽते तज्जन्मजमेव वेति ।

अत्र केचित् । अतीताशेषजन्मजपापलयोपगमे लिङ्गं दशाश्वमेधीशं दृष्ट्वा दशहरातिथौ । दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशय इत्यादीनि वचनानि निर्विषयाणि स्युः प्रवेशादेव सर्वपापनाशात् । अतः प्रवेशादेतज्जन्मजमेव पापं लीयते तत्तल्लिङ्गादिदर्शनादिना तु प्राग्जन्मीयपापक्षय इति मन्यन्ते ।

एवं तु जन्मान्तरसहस्रेणेत्यादिप्रागुदाहृतैः प्रवेशादिना ऽनेकजन्मजपापध्वंसबोधकवचोभिर्विरोधापत्तेस्तत्तल्लिङ्गार्चनादिना पापादिशब्दलक्षिताः पापवासना अनेकजन्मीयाः क्षीयन्ते प्रवेशात्त्वशेषपापनाश एव न च वासना ऽपि नश्यति काशीप्रविष्टानां प्रवृत्त्यभावापत्तेरित्यन्ये । तेषामयमाशयः । पापस्य द्वे शक्ती । एष एवासाधु कर्म कारयति तं यमेभ्यो ऽधो निनीषत इति श्रुतिसिद्धनरकजनकतावच्छेदिका प्रथमा पापः पापेन कर्मणेति श्रुतिसिद्धपापप्रवर्त्तकतावच्छेदिका द्वितीया । तत्र सर्वेषां पापानां प्रथमा शक्तिः प्रवेशादिना नाश्यते । द्वितीया तु वासनाशब्दिता तत्तल्लिङ्गदर्शनादिना तत्तन्माहात्म्योक्तक्रमेणैव नाश्यतइति ।

इतरे तु एवं सति पापादिशब्देषु शक्तिलक्षणापत्तिः शक्तस्य पापस्यानाशित्वापत्तिश्च दोषः । वासनानाशे च पुनः काशीस्थानां पापे प्रवृत्त्यनुपपत्तिः न च ततः प्राचीनजन्मानुवृत्तवासनया तदुपपत्तिः । कृत्तिवासविश्वेशादिदर्शनेनाशेषदुरितध्वंसोक्तेः । तद्वचनस्याखिलवासनानाशपरत्वे पापे प्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात् । अतः प्रवे-

शादखिलमेव पापं नश्यति काशीस्थतत्तत्तीर्थस्नानादिना एकद्व्यादिजन्मजपापक्षयोक्तिस्तु ये ऽन्यत्र मृताः पुण्यातिशयेन काश्यां जातास्तद्विषयेति न का चिदनुपपत्तिः। न च तेषामपि लिङ्गदेहस्य क्षेत्रप्रविष्टत्वात्सर्वं पापं नष्टमेवेति शङ्क्यम् । षाष्ठतिर्यगधिकरणन्यायात् । यतो विधिनिषेधेषु मनुष्याणामधिक्रिया अतः पशुपिशाचाद्या धर्माधर्मे ऽवरा मता इति पाद्माच्च मनुष्याधिकारित्वाच्छास्त्रस्य लिङ्गदेहे पापनाशायोगात् । या तु पिशाचमोचनाख्याने पिशाचस्यापि तत्स्नानात्पैशाच्यनाशोक्तिः सा निषादस्थपतीष्टिवद्यावद्वचनं वाचनिकमिति न्यायात्तन्मात्रविषयैव । न च लिङ्गस्य काशीप्रवेशात्पापनाशे वचो ऽस्ति तस्मात्काश्युत्पन्नविषयाणि तत्तल्लिङ्गदर्शनादिनैकद्व्यादिजन्मपापक्षयबोधकानि वचांसीत्याहुः ।

अपरे तु काशीस्मरणगमनदर्शनतत्तत्तीर्थस्नानतत्तल्लिङ्गदर्शनादीनां नियतक्रमाणां फलावैलक्षण्ये उत्तरोत्तरानर्थक्यापातात् प्रत्येकं सर्वपापनाशश्रवणाश्रयणे च स्वतो वैलक्षण्याभावे कायिकवाचिकमानसबुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्तात्यन्तावृत्तमहापातकोपपातकादिप्रतियोगिकृतवैलक्षण्यासंभवात् पापे च सर्वत्वस्यावान्तरवैजात्याव्यवच्छेदेनैव संकुचद्वृत्त्या सर्वेभ्यो ज्योतिष्टोमः सर्वेभ्यो दर्शपूर्णमासौ सर्वेभ्यश्चातुर्मास्यानीतिवत्संभवात् गमनादौ प्रत्येकमशेषपापक्षये ऽपि न का चिदनुपपत्तिः । तथा च प्रवेशाद्यज्जातीयाशेषपापं नष्टं तद्विजातीयमेकद्व्यादिजन्मीयं तत्तत्तीर्थस्नानादिना नश्यतीति वदन्ति ।

काशीप्रवेशेन कायिकादिभेदभिन्नानामनारब्धानां सवासनानां सर्वेषां पापानां निवृत्तिरेव भवति । न चैवं काशीस्थानां पापे प्रवृत्तिर्न स्यात् । प्रारब्धेनैव दुःखोत्प-

त्तिवत्पापप्रवृत्तेरपि संभवात् । तत्तत्तीर्थस्नानादिनैकह्या-दिजन्मीयपापनाशबोधकं तु शास्त्रं यावता पुण्येन तन्न-श्यति तावत्पुण्योदयपरम् । यद्वा यथा काश्यां कृतमल्प-मपि पुण्यं बहु भवति तथा पापमपीति स्पष्टं पुराणादौ । तथा च काश्यां कृतं यावत्पापमेकह्यादिजन्मीयसमं भवति तत्तीर्थस्नानादिना तावन्नश्यतीत्यर्थकं तच्छास्त्रम् । स्मर-णगमनक्षेत्रविश्वेशकृत्तिवासेशदर्शनादिना सर्वपापनाश-बोधकशास्त्रस्याप्येषैव गतिः । यत्तु तत्र ब्रह्मेश्वरं दृष्ट्वा ब्रह्मलोके महीयत इति ब्रह्मलोकादिफलं यच्च क्व चिन्मु-क्त्यादिफलं तदपि यात्रां कृत्वा देशान्तरमृतविषयम् ।

ननु काशीप्रवेशात्प्रवेशावधिकाशेषपापक्षये कृत-काशीयात्रस्याकृतकाश्यघस्य बहिर्गमनानन्तरमेव मरणे ऽक्षयस्वर्गापत्तिः केवलपुण्येन मर्त्यत्वासंभवात् । न च पुण्यान्तं यावत्स्वर्गभोगानन्तरं मुक्तिरेव तस्येति युक्तम् । श्रवणादिजन्यज्ञानाभावे तदयोगादिति चेन्न । तस्यापि मार्गस्थजन्तुमरणादिजन्याज्ञातपापोपपत्तेः । व्याघ्रादि-भिर्हनने दुर्मृत्युजपापसंभवात् दुष्टेनारब्धकर्मणा ऽन्ते दुष्टमतिसंभवेनान्ते या मतिः सा गतिरिति न्याये-नापि मर्त्यजन्मसंभवात् । अन्येषामभावे ऽप्यविमुक्तमेव निषेवेताविमुक्तं न विमुञ्चेदित्यविमुक्ते प्रविष्टस्य तत्र मरणान्तवासविधिवत्त्यागनिषेधातिक्रमप्रयुक्तपापस्याव-श्यकत्वाच्च । परं तु तस्योदयः देहक्षयश्चात्रैव भवतीत्य-न्यदेतत् । अतः काशीप्रवेशादशेषपापलये ऽपि न का चि-दनुपपत्तिरिति तु नवीनतमाः ।

अत्र परीक्षकैर्विचार्य युक्तः पक्षो ग्राह्यः । आरब्धानां च भोगेन नाशे शुद्धचित्तो जीवो गौरीशानुग्रहाच्छमादि-

साधनसंपत्तिं लभते स्वयं च जद्गुरुः स परमकृपया ब्रह्मात्मैक्यबोधसाधनं तारकमुपदिशतीति न श्रवणस्यापि ज्ञानं प्रति व्यभिचारः। तथा च जाबालोपनिषद्याम्नायते अविमुक्तं वै देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्। अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनामृती भूत्वा मोक्षी भवतीत्यादि। स्मर्यते च पुराणेषु तत्र तावत्कौर्मे। यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः। आचष्टे तारकं ब्रह्म तदेवमतिमुक्तदम्। काशीखण्डे च। ब्रह्मज्ञानेन मुच्यन्ते नान्यथा जन्तवः क्व चित्। ब्रह्मज्ञानं तदेवाहं काशीसंस्थितिभागिनाम्। दिशामि तारकं प्रान्ते मुच्यन्ते ते तु तत्क्षणात्। पाद्मे ऽपि निर्वाणपदमेवैतद्यदधिष्ठामि नित्यशः। म्रियमाणस्य जन्तोश्च वाक्यं कर्णे समुच्चरन्। विना वाक्योपदेशेन ब्रह्मात्मैक्यं न भासते। ब्रह्मात्मैकत्वविज्ञानादृतेमुक्तिर्न जायते। एवमन्यत्रापि। तारकं किमिति चेत्प्रणव इत्यवेहि। तदुक्तं काशीखण्डे। न वर्ण्यते कैः किल काशिकेयं जन्तोः स्थितस्यात्र यतो ऽन्तकाले। पचेलिमैः प्राक्तनपुण्यभारैरोंकारमोंकारयतीन्दुमौलिः अन्यत्रापि प्रणवं तारकं ब्रूते काश्यां देवो महेश्वरः।

ननु प्रणवेन कथं ब्रह्मात्मैक्यबोधः। शृणु अकारोकारमकारवाच्यान्विश्ववैश्वानरतैजससूत्रात्मप्राज्ञेश्वरान् ज्ञात्वा प्रथमं विश्वं वैश्वानरत्वेनाहमेव वैश्वानरो ऽस्मीति विभाव्य ततस्तैजसं सूत्रात्मत्वेनाहमेव सूत्रात्मा ऽस्मीति विभाव्य पश्चात्प्राज्ञमीश्वरत्वेनाहमेवेश्वरो ऽस्मीति विभाव्यानन्तरं समष्टिव्यष्टिस्थूलसूक्ष्मकारणोपाधिकमोंकारवाच्यं परं ब्रह्माहमस्मीति सर्वात्मत्वेन विभाव्य पश्चान्मनस्येकाग्रतामापन्ने स्थूलसूक्ष्मादि सर्वं जगत्सोपानावरोहण-

न्यायोक्तक्रमेण निर्विशेषे ब्रह्मणि विलाप्यैकाग्रेण मनसा स्वस्य ब्रह्मत्वं साक्षात्करोतीति।

यद्वा तद्यो ऽहं सो ऽसौ योऽसौ सो ऽहमित्यत्र सशब्देन परमात्मोच्यते। अहंशब्देन प्रत्यगात्मा ऽवगम्यते। ततश्च समानाधिकरणयोः सो ऽहमित्यनयोः परमात्मा ऽहमित्यर्थस्तथा प्रणवस्यापि। सो ऽहमित्यस्यैव प्रणवत्वेन निपातनात्। तथा हि। सो ऽहमित्यस्य पृषोदरादित्वेन निपातनात्सकारहकारलोपे कृते परिशिष्टयोरोऽमित्यनयोरेङः पदान्तादतीति पूर्वरूपैकादेशात्मकं संधिं कृत्वोच्चारणे ओमिति शब्दो निष्पन्नः तदुक्तम्। सकारं च हकारं च लोपयित्वा प्रयोजयेत्। संधिं च पूर्वरूपाख्यं ततो ऽसौ प्रणवो भवेदिति। एवं चोमित्यस्य परमात्मा ऽहमित्यर्थ इति सिद्धम्।

अत्र कश्चिदाह। काश्यादिकक्षाभेदेन चतुर्विधे क्षेत्रे मणिकर्ण्यां जान्हव्युदकं भूमौ विश्वेशाभिमुख्येन कालतो मृतस्य द्विजमात्रस्य भैरवयातनादिजनकपापहीनस्य विश्वेशभक्तस्य काशीमरणान्मुक्तिर्भवति न वेति संशयरहितस्य सद्यः परब्रह्मसायुज्यं भवति द्विजेतरस्यापापस्य नरमात्रस्य द्विजस्यापि कस्य चिदपापत्वे ऽपि विश्वेशाभक्तस्य तद्भक्तत्वे ऽप्यपापत्वे ऽप्युक्तप्रकारात्प्रकारान्तरेण मृतस्य चतुर्विधे क्षेत्रे यत्र क्वापि मरणे क्षेत्रावान्तरभेदतारतम्येन जीवतारतम्येन मरणस्य बुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वप्रयुक्ततारतम्येन कर्मादितारतम्येन च सालोक्यादिप्राप्तिद्वारा कैवल्यं भवति। पापिनस्तु नरमात्रस्य चतुर्विधे ऽत्र क्षेत्रे यत्र क्वापि येन केनापि प्रकारेण मृतस्य भैरवयातनानुभवानन्तरं मोक्षः। नन्वत्र हि जन्तोः प्राणेषूत्क्रम-

माणेष्विति जन्तुमात्रस्य श्रवणात्कथं त्रैवर्णिकस्यैव सायुज्यमिति चेन्न रुद्रस्तारकं ब्रह्म व्याचष्टइत्यनेनैकवाक्यतया प्रणवाख्यतारकव्याख्याने योग्यत्रैवर्णिकमात्रपरत्वाज्जन्तुपदस्य । अथोत्क्रान्त्यनन्तरं देहाभिमानाभावाज्जन्तुमात्रस्य प्रणवाधिकार उपपद्यत इति चेन्न उत्क्रममाणेष्विति वर्त्तमानप्रत्ययदर्शनेनोत्क्रमदशायामेवोपदेशस्वीकारात् । उत्क्रमानन्तरमदेहस्योपदेशायोगाच्च । कर्णमूलगतो हर इत्यादिवचनविरोधाच्च विदेहस्य कर्णाभावात् । एवं पुराणगतजन्तुशब्दस्यापि त्रैवर्णिकमात्रपरतैव । तस्मात्काष्ठपाषाणभूतस्तु जान्हवीजलमध्यगः अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हर इति वचनात् । मुमूर्षोर्मणिकर्ण्यन्तरर्द्धोदकनिवासिन इत्युक्तेश्चार्द्धजले मणिकर्ण्यां विश्वेशाभिमुखस्य । कालेनोपरतो यातीत्युक्तेः आत्मरक्षा ऽत्र कर्त्तव्या महाश्रेयोऽभिवृद्धये । अत्रात्मत्यजनोपायं मनसापि न चिन्तयेदिति वचनाच्च कालान्न तु बलात् । अविमुक्तइत्यादिसप्तमीबलाद्भूमौ मृतानां त्रैवर्णिकानामपापत्वाद् द्विजत्वाच्च तदैव तारकोपदेशयोग्यानां मद्भक्तः कृतनिश्चय इत्युक्तेर्विश्वेशभक्तानां काशीमरणं मोक्षदं न वेति संदेहशून्यानां च विश्वगुरुश्रीविश्वेशोपदिष्टतारकोदितब्रह्मबोधात्सद्यस्तत्सायुज्यं भवतीति सिद्धम् ।

ननु ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये वर्णसंस्थिताः । स्त्रियो म्लेच्छाश्च ये चान्ये संकीर्णा वर्णजातयः । कीटाः पिपीलिकाश्चैव ये चान्ये पक्षिणस्तथा । कालेन निधनं प्राप्ता अविमुक्ते वरानने । चन्द्रार्द्धमौलयस्त्र्यक्षा महावृषभवाहनाः । शैवे मम पुरे देवि जायन्ते तत्र मानवाः मानवा इति ब्राह्मणश्रमणन्यायेन ये भक्ता वरदं देवमविमुक्तं परं पदम् । ते विशन्ति महादेवमाज्याहुति-

रिवानलम्। अकामो वा सकामो वा तिर्यग्योनिगतो ऽपि वा। अविमुक्ते त्यजन्प्राणान्मम लोके महीयते। गृहस्थाश्चैव यतयस्तस्मिंस्तीर्थउपासकाः। एकदण्डास्त्रिदण्डाश्च हंसव्रतधराश्चये। कर्मभेदेन तेषां तु सर्वेषामास्थितो ह्यहम्। विभजामि परं स्थानं यच्छन्मोक्षपदं शुभमित्यादिनानापुराणवचनैः काश्यां मृतानां क्षेत्रावान्तरभेदतारतम्यात्सारूप्यादिसंभवे ऽपि विदेहकैवल्यं कथं स्यादिति चेदुच्यते। तदुपर्यपि हि बादरायणः संभवादिति व्याससूत्राद्देवानामपि ब्रह्मविद्याधिकारे सिद्धे ते विशन्ति महादेवमित्यादिवचनशतेभ्यः शिवलोकं गतानां महेशात्तत्त्वावबोधलाभे कैवल्यं भवतीति।

अन्यस्त्वाह यद्यपि पुराणेषु सारूप्याद्यविशेषेण मोक्षो मरणफलतया ऽवगम्यते तथा ऽप्यधिकारितारतम्येन निष्पापानामीशार्पितकर्मणां मरणादेव मुक्तिः। ततो निकृष्टानामग्निप्रवेशादिकृतां शंभुसामीप्यम्। न चात्र निषेधात्स्वेच्छया मरणात्कथमीशसामीप्यम्। अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः। प्रविशन्ति मुखं ते मे निःसंदिग्धं वरानने। कुर्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्चयाः। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपीत्यादिमात्स्यादिवचनैरग्निप्रवशप्रायोपवेशयोरभ्यनुज्ञानेन निषेधस्येतो ऽन्यत्र संकोचात्। तिर्यक्प्रभृतीनामत्यन्तं पापीयसां च सारूप्यम्। ततो ऽप्यधमानां सालोक्यमिति। किं च चतुर्विधे क्षेत्रे यथा यथा योगपीठाद्विप्रकर्षस्तथा तथा मरणफलापकर्ष इत्यप्याह। तदपरे न क्षमन्ते। तमेव विदित्वेत्यादिश्रुतिविरोधान्मरणान्मोक्षायोगात्। ननु मरणादेव मोक्षबोधकनानापुराणबलात्तमेवेति श्रुतिरन्यत्र सावकाशेति चेन्मैवम्। पुराणेन वेदसंकोचायोगात्। काशीमरणस्य

जाबालोपनिषदा तारकोपदेशद्वारा ज्ञानजनकत्वबोधना-च्चेति । यश्चाह काशीमरणस्य चित्तशुद्धावुपयोगः । वारा-णसीस्थतीर्थानामवगाहनतः पराम् । अन्तःकरणसंशुद्धि-माप्नुयाद्विजितेन्द्रिय इत्यादिवाक्यैस्तस्याः पूर्वमेव सिद्ध-त्वात् । किं तु बोधद्वारा मुक्तावेव । यो ऽपि प्रथमः पक्षः । मूमूर्षोर्मणिकर्ण्यन्तर्ह्रदोदकनिवासिन इत्यादिपूर्वोक्तवि-शेषणवतस्त्रैवर्णिकस्यैव साक्षात्कैवल्यमन्यस्य तूक्तसालो-क्यादिद्वारेति । सो ऽप्ययुक्तः । जन्त्वादिसाधारणपदश्र-वणात् । तथा हि अत्र हि जन्तोः प्राणेषूत्क्रममाणेष्वित्या-दिश्रुतौ कीटाः पतङ्गा मशकाश्च वृक्षा जले स्थले वा विच-रन्ति मर्त्याः मण्डूकमत्स्याः कृमयो ऽपि काश्यां त्यक्त्वा शरीरं शिवमाप्नुवन्ति अविमुक्तरहस्यज्ञा मुच्यन्ते ज्ञानिनो नराः । अज्ञानिनो ऽपि मुच्यन्ते क्षेत्रे ऽस्मिंस्ते त्वकल्मषाः । सर्वान् जन्तून्मोचयेदन्तकाले विश्वेशो ऽत्र श्रोत्रमन्त्रोपदे-शात् । आब्रह्मस्तम्बपर्यतं यत्किंचिज्जन्तुसंज्ञितम् । चतुर्षु भूतग्रामेषु काश्यां तन्मुक्तिमाप्स्यतीत्यादि काशीखण्डे । एवमन्येष्वपि श्रुतिस्मृतिपुराणादिषु जीवसामान्यपरज-न्त्वादिपदश्रवणेन कृमिपर्यन्तानां साक्षाद्ग्रहणेन च जन्तु-पदस्य त्रैवर्णिकमात्रपरत्वकल्पनस्यानुचितत्वात् । प्रणव-श्रवणे द्विजात्यतिरिक्तस्य कथमधिकार इति चेत्सत्यमस्म-दाद्युपदिष्टप्रणवश्रवणे तदितरस्यानधिकारः । अपारजन्मा-र्जितपुण्यपुञ्जप्रसादितपरमेश्वरोपदिष्टप्रणवश्रवणे तु काशी-माहात्म्यसोमपरमेश्वरसाक्षात्काराभ्यां ध्वस्ताशेषकल्म-षस्य प्राणिमात्रस्याधिकारः । अत एव ब्रह्मवैवर्त्ते तीर्था-न्तरात्काश्या विशेष उक्तः । जितेन्द्रियाः पापविवर्जिताश्च शान्ता महान्तो मधूसूदनाश्रयाः । अन्येषु तीर्थेषु हि मु-क्तिभाजो भवन्ति काश्यामपि को विशेष इति शिष्यप्रश्ने

गुरुणोत्तरितम् विशेषं शृणु वक्ष्यामि काश्याः कथयतो मम। कृतानि साधनान्यत्र स्वल्पान्यपि महामते। भवन्ति काशीमाहात्म्यात्सिद्धान्येव न संशयः। अन्यत्र साधुसुकृतैः कृतैर्मुच्येत वा न वा। अत्र साधनवैकल्ये काशी पूर्णं प्रकल्पयेत्। तथा कलिकालस्त्वयं तीक्ष्णः क्व नयः क्व परात्मदृक्। काश्येव शरणं तेषां शुद्धिदा मलिनां नृणाम्। कलौ विनष्टव्रतधैर्यवीर्या गच्छन्तु काशीं परमार्थराशिम्। तथा ये वा द्विजाग्र्याः श्वपचाश्च निन्द्या ये चक्रवर्त्तिष्वपि धर्मरूपाः। ये वा दरिद्राः परिमार्त्तिभाजः समानरूपां गतिमाप्नुवन्ति। काशीखण्डे च संसारभयभीता ये ये बद्धाः कर्मबन्धनैः। येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः। श्रुतिस्मृतिविहीना ये शौचाचारविवर्जिताः। येषामित्यादि पूर्ववत् तथा सौभाग्यभाग्यभूर्या वै विख्याता मणिकर्णिका। ददामि तस्यां सर्वस्वमग्रजायान्त्यजाय चेति। अत एव पाद्मे ऽधिकारसंपादनमुक्तम्। पुमांसं क्षीणकलुषं शंकरस्तारकं वचः। श्रावयामास विधिवत्संपाद्याधिकृतिं परामिति। इदं चाधिकारसंपादनं नीचेष्वनधिकारिष्वेव। जातिकर्मभ्यामुत्तमानां स्वत एवाधिकारसत्त्वेन संपादनानर्थक्यात् यतस्तत्रैवोक्तम्। गणयति न कथं चिच्छंकरः काशिकायां किमुत मम सुभक्तो ब्राह्मणः पुल्कसो वा। उपदिशति सदा ऽन्ते वाक्यमेकात्मनिष्ठं द्विजकुलनिरपेक्षो भाव्य तत्राधिकारमिति। यत्तु भूमौ मृतानामेव मुक्तिरिति। तदपि न। भूमौ जले ऽन्तरिक्षे वा यत्र क्वापि मृतो द्विजः ब्रह्मात्मैकत्वमाप्नोति काशीशक्तिमुपाहितः। सूच्यग्रमात्रमपि नास्ति ममास्पदे ऽस्मिन्स्थानं सुरेश्वरि मृतस्य न यत्र मुक्तिः भूमौ जले मध्यतो वा ऽन्तरिक्षे सर्पाग्निदस्युपविभिर्निहतस्य जन्तोरित्यादिव-

चनात् । अनेन दुर्मृत्युजदोषो ऽप्यत्र नास्तीत्युक्तम् । न चात्र कालकृतो ऽपि विशेषो ऽस्ति । उत्तरं दक्षिणं वा ऽपि अयनं न विचारयेत् । सर्वो ऽप्यस्य शुभः कालो ह्यविमुक्ते म्रियेत य इति काशीखण्डात् । तस्मात्सर्वस्यापि काश्यां यत्र क्वापि कथं चिन्मृतस्य मोक्ष इति सिद्धम् । क्व चिद्धि शिवशिवेत्युपदिशाम्यहमिति द्विरावृत्तः शिवशब्दस्तारकतयोक्तः रामतापनीये । मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् । उपदेक्ष्यसि सन्मन्त्रं स मुक्तो भविता शिवेति । पाद्मे तु श्रीरामरामेति एतत्तारकमुच्यते इति श्रीशब्दपूर्वकस्त्रिरावृत्तो रामशब्दस्तारकतयोक्तः । अनेन षडक्षरमन्त्रोपलक्षणाच्छ्रीशब्दप्रयोगस्य भक्त्यतिशयार्थत्वान्न पाद्मतापनीययोर्भिन्नार्थत्वम् । तथा च प्रणवाधिकारिणां सर्वेषां प्रणवोपदेश एव तदनधिकारिषु शैवानां शिवमन्त्रोपदेशः । वैष्णवानां तु राममन्त्रोपदेशः शिवमद्वैतं चतुर्थं मन्यन्तइति श्रुतेः शिवेतिशब्दस्य रमन्ते योगिनो ऽस्मिन्नितिनिर्वचनेन रामशब्दस्यापि चाद्वितीयप्रत्यगभिन्नब्रह्मबोधकत्वान्न ताभ्यां मोक्षफलकतद्बोधानुपपत्तिशङ्कापीत्यपि के चित् । अस्मिन्मते ऽपि क्षुद्रजन्तूनामधिकारोपपत्तिरीशाधीनैव । तेषां फलोन्मुखेन केन चिददृष्टेन कर्मणा क्षुद्रजन्मोपपत्तिः । अनादिभवसञ्चितासंख्यपुण्यैः काश्यां मरणे मुक्तिश्चेति बोध्यम् । यत्तु क्व चित्क्षेत्रभेदादधिकारिभेदाच्च सामीप्यादिफलकीर्त्तनम् । तन्निर्विषयमोक्षभीरूणां तन्माहात्म्यानभिज्ञानां सन्तोषार्थं ज्ञेयम् । काश्यां स्वर्गादिकमुद्दिश्य यागाद्यनुष्ठाता ऽपि वाटिकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति वासिष्ठोक्ताभाणकन्यायेन मोक्षमेव लभते । अत्र के चिदाहुः । स्वस्वधर्मनिरतस्यापापस्य सर्वस्याप्यनन्त-

रमेव मोक्षः। तद्भिलक्षणस्य तु यातनातोऽधिकारसंपादनेन। तदुक्तम्। स्वे स्वे कर्मणि निष्णातानुत्तमाधममध्यमान्। अधमानपि मार्गस्थान्नयामि परमां गतिम्। केवलं धर्मसापेक्षः कर्णे जपति तद्वचः। अधर्मिष्ठस्य तत्क्षेत्रे यातनान्ते दिशेन्मतिमित्यादीनि। अन्ये तु सर्वत्र तारकोपदेशे वर्त्तमानतानिर्देशात्। कर्णजापोक्तेश्च देहे सत्येवोपदेशो ज्ञानं च देहापाये तु कैवल्यमेव। तथा च धर्ममर्यादास्थापनार्थं भैरवयातनोक्ती रुद्ररोदनादिवदर्थवादः यदि तु सा प्रामाणिकी तदा प्रारब्धवज्ज्ञेया ज्ञानं तु तदैव भवतीति मन्यन्ते। ननु मृतिकाले कफाद्यवरुद्धकण्ठस्यौदर्यवाताभिघातेन विदीर्यमाणाशेषमर्मणो व्याकुलबाह्यान्तरिन्द्रियस्य प्रणवात्मकशब्दस्य श्रावणसाक्षात्कार एव दुर्लभः। सत्यपि तस्मिंस्तदर्थो दुरवगमः तस्मिन्नपि सति तस्य सर्वेषां वेदान्तानां चाद्वितीये तात्पर्यनिर्धारणानुकूलविचारात्मकस्य तादृशतात्पर्यविशिष्टशब्दज्ञानात्मकस्य वा श्रवणस्य श्रुतस्यार्थस्य युक्तिभिरनुचिन्तनरूपस्य विपरीतभावनानिवृत्तिफलकप्रमेयतत्त्वावधारणानुकूलतर्कानुसंधानात्मकस्य वा मननस्यासंभवः। अत एवासंभावनाविपरीतभावनयोस्तत्त्वसाक्षात्कारप्रतिबन्धकयोरभावे च शब्दप्रमाणादुत्पन्नोऽपि ब्रह्मसाक्षात्कारः पुरुषापराधासंभावनादिप्रतिबद्धत्वान्नाविद्यानिवर्तनक्षमः। तदनिवृत्तौ च तन्मूलकसंसारानिवृत्तेः कथं मोक्षः तस्मात्काशीमरणान्मुक्तिप्रतिपादकवचनजातं तद्द्वारा विध्येकवाक्यतया तदर्थवाद एवेति चेन्मैवम्। वृन्दारकवृन्दवन्दितपादारविन्दोमासहायाचिन्त्यशक्त्यपरिमेयमहिमश्रीशङ्करकृपया श्रीकृष्णकृपया भीष्मस्य शरतल्पजवेदनानिवृत्तिवत्काश्यां मुमूर्षोः सकलवेदनानिवृत्त्या चित्तप्र-

सादकरणपाटवादिसंभवेन श्रवणादिसंभवात् । अत एव मात्स्ये अन्तकाले मनुष्याणां छिद्यमानेषु मर्मसु । वायुना प्रेर्यमाणानां स्मृतिर्नैवोपपद्यत इति क्षेत्रान्तरमरणप्रकारमुक्त्वा । अविमुक्ते त्वन्तकाले भक्तानामीश्वरः स्वयम् । कर्मभिः प्रेर्यमाणानां कर्णजापं प्रयच्छति । ईश्वरप्रेरितो याति दुष्प्रापमकृतात्मभिरिति तुशब्देन क्षेत्रान्तरापेक्षया विशेषो ऽभिहितः स च मरणकाले स्मृत्युपपत्तिरूप एव । गारुडे च । मरणावसरे सकलश्रमनिवृत्तिः सहेतुकोक्ता अनिलो मृगनाभिरेणुगन्धैरधिकाशि प्रणवोपदेशकाले । हरते मरणश्रमं नराणां हरवामार्द्धकुचोत्तरीयजन्मेति ।

केचित्तु यथा स्वप्ने दृष्टेरेव सृष्टित्वेनेन्द्रियाणां चातीन्द्रियत्वेन तत्सृष्टेरभावे ऽपि श्रवणादिव्यवहारस्तथा जागरे ऽपि दीर्घस्वप्ने बाह्येन्द्रियाभावे ऽपि मनोमात्रेणैव श्रवणादिव्यवहार इति स्थिते ऽत्र मरणकाले बाह्येन्द्रियापेक्षामन्तरेण मनसैव श्रवणाद्युपपत्तौ काशीमरणादत्यन्तशुद्धस्य श्रीचन्द्रशेखरसाक्षात्काराज्ञष्टाशेषसंतापस्य तदनुग्रहाच्च सर्वविक्षेपापगमेन प्रत्यगभिन्नब्रह्मनिमग्नचित्तस्य अत एव संजाततत्साक्षात्कारस्य क्षणेनैवासंभावनादेः समूलस्यात्यन्तिको बाध उपपद्यतएव । ननु दीर्घकालनैरन्तर्याद्रैरनुष्ठितश्रवणमननिदिध्यासनादिकं विना शोधिततत्त्वंपदार्थसाक्षात्काराभावात् तादृशतत्पदार्थज्ञानासंभवाच्च न वाक्यार्थसाक्षात्कारोत्पत्तिः पदार्थबुद्धेर्वाक्यार्थबुद्धौ हेतुत्वादिति चेन्न । चिरत्वविशेषणवैयर्थ्यात् उत्तमाधिकारिषु शीघ्रमेव सवसंभवात् । न चावृत्तिरसकृदुपदेशादिति सूत्रविरोधः तस्य मध्यमाधमाधिकारिविषयत्वात् । न च काश्यां म्रियमाणानां सर्वेषां कथमुत्तमत्वमिति शङ्क्यम् ।

यतः स्थावराणां कृम्यादीनां च तत्त्वावबोधाधिकारं संपादयितुर्विश्वेशस्य सर्वेषामुत्तमाधिकारित्वसंपादने न कश्चित् प्रयत्नः । स्मर्यते हि मार्कण्डेये परमेश्वरानुगृहीतमहर्षिवरप्रभावेन पक्षिणामुत्तमाधिकारित्वलाभेन बाल्यएवातिशीघ्रमेव तत्त्वसाक्षात्कारलाभः जैमिनिं प्रति पुराणवक्तृत्वं च । वासिष्ठे च श्रीसरस्वतीकरमकलस्पर्शप्रभावेण भुशुण्डप्रमुखानां काकानां तत्त्वसाक्षात्कारः तत्र भुशुण्डस्य श्रीवसिष्ठं प्रति वक्तृत्वं च स्मर्यते । एवं च परमेश्वरानुगृहीतानां किं किं न संभाव्यते । न चैवं श्रवणादेः साक्षात्कारं प्रति व्यभिचारः । भगवतीकृपया वामदेवादित्पूर्वजन्मश्रवणादिकमनुष्ठितमेव । तदुक्तं पाराशरीये । अत्रैव मरणं सम्यग्यस्य सिद्ध्यति देहिनः । विज्ञानसाधनं तेन सर्वं पूर्वमनुष्ठितमिति । तस्माच्छ्रीशंभुमुखचन्द्रनिःसृतप्रणवामृतस्य श्रुतिपुटेन पानादेवाविद्याविषनिवृत्तिसिद्धेः काशीमरणान् मुक्तिरित्यादिवाक्यानां नार्थवादतेति सिद्धम् ।

एतेन मरणात्साधनचतुष्टयसंपत्तेः प्रायेणानुपलम्भात्तद्रहितायोपदेशोपगमे ऽथातो ब्रह्मजिज्ञासेतिसूत्रे ऽथशब्देन साधनचतुष्टयंसपत्त्यानन्तर्योक्तेः तत्संपन्नमेवाधिकारिणं प्रति वेदान्तशास्त्रारम्भो न स्यात् तद्वतामपि श्रवणादिपरिहारेण काशीमरणायैव प्रयासापत्तिश्चेति परास्तम् । बहुजन्मार्जितपुण्यपुञ्जप्रसादितमेश्वरकृपया मरणावसरएव साधनसंपत्तिस्वीकारात् । जीवदवस्थायामेव सद्यो मोक्षप्रदविज्ञानोपायं श्रवणादिकं हस्तगतं त्यक्त्वेन्द्रविहितकामादिदशविघ्नवत्यां काश्यां मृतिकालिकविज्ञानाय प्रवृत्त्यसंभवाच्च । कौर्मे उपायान्तरमभिधाय वसेद्वाऽऽमरणाद्विप्रो वाराणस्यां समाहित इति वदता महेश्वरे-

णैव वाशब्दबलात्काश्या बहिर्विज्ञानसंपादनाशक्तस्यैव काशीवासावश्यकत्वाङ्गीकाराच्च । काश्यां शतवर्षजीविनामप्यन्ते प्रारब्धेन बहिर्मरणदर्शनाच्च शास्त्राधिकारिणां सर्वेषां सिद्धसुरासुरयक्षगन्धर्वकिन्नरनरादीनां कश्यां मातुमशक्यत्वाच्च काशीमरणस्य मोक्षं प्रति साक्षाद्धेतुत्वाभावात्तत्र कस्यापि मुमुक्षोः प्रवृत्तिर्न स्यादित्यपि न च शङ्क्यम्। परंपराहेतावपि प्रवृत्तिसंभवात् । अन्यथा मुमुक्षोः शास्त्रेऽपि प्रवृत्तिर्न स्यात्तथा चानिर्मोक्षप्रसङ्गः । न स्याच्च बुभुक्षोर्भोजनजन्यतृप्त्यर्थिनस्तण्डुलक्रयणादौ स्वर्गकामस्य स्वर्गसाधनयागसाधनपुरोडाशानुकूलव्रीहिक्रयणादौ च प्रवृत्तिरिति वैदिकलौकिकसर्वव्यवहारोच्छेदप्रसङ्गः । तस्मात्काशीमरणान्मुक्तिरिति श्रुत्या यद्यत्साधनमन्तरेण मुक्त्यनुपपत्तिस्तत्सर्वं संगृहीतं भवतीति युक्तमस्या वृद्धकुमारीवाक्यन्यायोदाहरणत्वम् । तथा सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति ये वै तन्वं विसृजन्त्यत्र धीरास्ते वै जनासो अमृतत्वं भजन्तइति श्रुतिवाक्यं दुष्कृतोऽपि दुराचारो ब्रह्महत्यादिपातकी हरिं ध्यात्वा त्यजेद्देहं प्रयागे मुक्तिभाग्भवेदित्यादिपुराणवाक्यं च यदन्तरेण मोक्षोऽनुपपन्नस्तत्सर्वमनेन न्यायेन कल्पयति । तत्र तावत्तमेव विदित्वेत्यादिश्रुतिविरोधाद्धरिं ध्यायतो मुमुक्षोः प्रयागमरणावसरे तत्त्वज्ञानं भवतीति कल्प्यते । ज्ञानं प्रति श्रवणादेर्व्यभिचारवारणायाव्यवहितोत्तरत्वनिवेशप्रयुक्तगौरवनिरासाय च जन्मान्तरीयश्रवणादिस्मरणं वामदेवादिवत्कल्प्यते काश्यामिव प्रयागेऽपि मृतिकालउपदेशो भवतीत्यश्रवणात् । तथा च प्रयागमाहात्म्ये विना ज्ञानेन मुच्यन्तइत्यादिवचनं तज्जन्मानुष्ठितश्रवणादिजन्यज्ञानं विना न मुच्यन्तइत्यर्थपरतया

नेयम्। चित्तशुद्धिस्तु क्षेत्रगमनदर्शनप्रवेशमुण्डनस्नानश्राद्धलिङ्गदर्शनादिभिर्भवतीति बोध्यम् तद्वचनानि ग्रन्थविस्तरभयान्नेह लिख्यन्ते। चित्तशुद्धौ च शमादयो ऽपीशानुग्रहात्सिध्यन्तीति सर्वं पूर्ववज्ज्ञेयम्। इयांस्तु विशेषः यत्काश्यां मृतस्य जन्तुमात्रस्य मोक्षः प्रयागे तु स्वयं कालेन वा मृतस्य मुमुक्षोरेव मोक्षः। अन्येषां तु यत्प्राप्तीच्छया यो मृतस्तत्प्राप्तिरेव तस्य भवतीति। स च विशेषस्तिष्ठतु नाम उदाहृतश्रुत्यादेरेतन्न्यायोदाहरणत्वे तु न का ऽपि क्षतिः। इति वृद्धकुमारीवाक्यन्या०। अयमेव कैश्चित् वृद्धकुमारीवरन्यायत्वेनोदाह्रियते ३४। ७९।

अत्रापि प्रसङ्गात्पठितं न्यायत्रयम्। अन्ते या मतिः सा गतिरिति न्या०। ३५। ८०।

ब्राह्मणश्रमणन्या०। श्रमणो बौद्धयतिः यथा तस्याशास्त्रीयविधिना त्यक्तशिखासूत्रकक्षादेस्त्यक्तनित्यादिकर्मणश्चेदानीं ब्राह्मणत्वाभावे ऽपि भूतपूर्वेण ब्राह्मणत्वेन निर्देशस्तथा शिवसारूप्यं प्राप्तानामपि प्राक्तनया मानवसंज्ञया निर्देश इत्युदाहरणसंगतिः। एवं विज्ञातारमरे केन विजानीयादिति मुक्तजीवपरतया वृद्धैर्विवृतायां श्रुतौ विज्ञातृत्वोक्तिर्निरुपाधिके तस्मिंस्तदसंभवादनेन न्यायेन भूतपूर्वगत्यैव संगच्छतइति बोध्यम्। ३६। ८१।

यत्र तु भाविसंज्ञया निर्देशो यथा नारुद्रो वसेत्काश्यामित्यत्र तत्र सूत्रशाटिकान्यायावतारः। सूत्रस्य शाटिकां वापयतीत्यत्र यथा सूत्रावस्थायां भाविन्या शाटिकेति संज्ञया निर्देशस्तथा दार्ष्टान्तिके ऽपीति बोधपम्। ३७। ८२।

अत्राजातपुत्रनामोत्कीर्त्तनन्यायो ऽप्यवतरति ३८। ८३।

आभाणकन्या० । आभाणकं लौकिकी गाथा । न्यायो ऽयं तत्रैवाख्यातविषयः । ३९ । ८४ ।

कुमारीन्यायविषय एव जलानयनन्यायो ऽप्यवतरति तद्यथा जलमानीयतामित्युक्ते ऽचोदितमपि पात्रानयनं जलानयने ऽन्तर्भवति एवमिहापि बोध्यम् । ४० । ८५ ।

एतेनाग्न्यानयनन्यायो व्याख्यातः । ४१ । ८६ ।

इक्षुरसन्या० व्याख्यातोऽयम् । ४२ । ८७ ।

इक्षुविकारन्यायो ऽप्येतद्विषये प्रवर्त्तते । इक्षूणां विकारेष्वपि हि रसगुडशर्करासितासु मालिन्यापगमतारतम्यादेव विभिन्नरूपत्वं दृश्यते तथा सत्त्वादिष्वपीति बोध्यम् । ४३ । ८८ ।

व्रीहिबीजन्या० व्याख्यातः ४४ । ८९ ।

राजसं तामसं चेति न्यायः । ४५ । ९० ।

यः करुते स भुङ्क्ते इति न्यायश्च स्पष्टः ४६ । ९१ ।

कीटभृङ्गन्या० । कीटो यथा भृङ्गेण गृहीतस्तद्भयात्तमभिध्यायंस्तत्स्वरूपतामेति तथा हरिहरौ प्रेम्णा ऽन्योन्यध्यानादन्योन्यात्मकतां प्राप्तावित्यर्थः । ४७ । ९२ ।

अश्मलोष्टन्या० । यथा तूलाद्यपेक्षयाऽतिकठिनस्यापि लोष्टस्याश्मापेक्षया मृदुत्वं तथा प्रकृते ऽपीत्यर्थः ४८ । ९३ ।

अयं वैषम्याधिक्यविवक्षायां स्वल्पवैषम्यविवक्षायां तु पाषाणेष्टिकान्या० । ४९ । ९४ ।

बिल्वखल्वाटन्या० । अयं केन चित्पद्येन निबद्धः । तद्यथा । खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके वाञ्छन्देशमनातपं विधिवशाद्बिल्वस्य मूलं गतः । तत्रा-

प्याशु महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनमिति। ५०। ९५।

कोशपानन्या०। कोशपानं दिव्यविशेषस्तस्य न्यायः तत्प्रकारश्चेत्थं दुर्गादीनुग्रान्देवान्पूजयित्वा तत्स्नानोदकं चाहृत्य तोय त्वं प्राणिनां प्राण इत्यादिमन्त्रेण प्राड्विवाकस्तत्तोयं संश्राव्य शोध्येन च तत्तोयं पात्रान्तरे कृत्वा सत्येन मा ऽभिरक्षेत्यनेनाभिमन्त्रितं प्रसृतित्रयं पाययेत्। एवं कृते चतुर्दशाद्दिनात्प्राग्यस्य राजनिमित्तं दैवं वा घोरं दुःखं न जायते स शुद्धः अशुद्धो ऽन्यः। तथा च सर्वदिव्यसाधारणपूर्वदिनोपवासवनश्चौरस्य तत्पानकाले सुखं भवति शास्त्रनिर्दिष्टावधिकाले तु महत् दुःखं यथा तथा हरिहरादिष्वेकत्र भक्तिव्याजेनेतरनिन्दां कुर्वतो निन्दाव्यसनिनो यद्यपि तत्काले स्यात्किंचित्सुखं तथा ऽपि निन्दाजन्याघपरिपाककाले ऽतिघोरं नरकादिदुःखं भवतीति न्यायसंगतिः। ५१। ९६।

यदा त्वीशकोपाच्छीघ्रमेव निन्दकस्य दुःखं स्यात्तदा तण्डुलभक्षणन्यायप्रवृत्तिः इदमपि दिव्यम्। एवमग्रे ऽपि दिव्यम्। एवमग्रे ऽपि षट्सु न्यायेषु बोध्यम्। तच्चेत्थं शुक्लाञ्छालितण्डुलानादित्याग्रे मृत्पात्रे धृत्वा स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् प्रातः स्नातं प्राङ्मुखमुपोषितं भक्षयित्वा पिप्पलपत्रे निष्ठीवयेत्। एवं कृते यस्य हनुर्लोहितं दृश्यते तालु च शीर्यते कम्पते च गात्रं सो ऽशुद्धः शुद्धो ऽन्य इति। ५२। ९७।

विषभक्षणन्यायो ऽपीह बोध्यः। तद्यथा कृतोपवासः प्राड्विवाकः शंभुं संपूज्य तदग्रे विषं संस्थाप्य त्वं विष ब्रह्मणा सृष्टमित्यादिना ऽभिमन्त्र्य त्रिंशद्गुणेन घृतेन

संयोज्य च दक्षिणाभिमुखाय शीतलदेशे निविष्टाय दद्यात। एवं कृते आकरतालिकाशतपञ्चकं यो निर्विकारः स शुद्धः। अनन्तरं चिकित्सनीयः। अशुद्धो ऽन्यः। ५३। ९८।

सत्याभिसंधस्य मोक्षो बन्धो ऽन्यस्येति विवक्षायां तप्तपरशुग्रहणन्यायो ऽवतरति। अयं सोदाहरणं श्रुत्योपपादितः। पुरुषं सोम्योत हस्तगृहीतमानयन्ति अपहार्षीस्स्तेयमकार्षीत्परशुमस्मै तपतेति। स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते। सो ऽनृताभिसंधो ऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यते ऽथ हन्यते। अथ यदि तस्याकर्त्ता भवति तत एव सत्यमात्मानं कुरुते सत्याभिसंधः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यते ऽथ मुच्यते स यथा तत्र न दह्यते तथैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति। ५४। ९९।

धटारोहणन्यायो धर्माधर्मन्यायस्तप्तमाषिकोद्धरणन्याय उदकनिमज्जनन्यायश्चापीह प्रवर्त्तते। तत्र तावद्धटारोहणप्रकार उच्यते सर्वदिव्यसाधारणधर्मानुष्ठानानन्तरं प्राड्विवाको धटं धट त्वं ब्रह्मणा सृष्टृ इत्यादिमन्त्रैरामन्त्रयते शोध्यस्तु त्वं तुलेत्यादिना मन्त्रेण धटापरनामधेयां तुलामामन्त्रयते। अनन्तरं प्राड्विवाकः शोध्यं तुलामारोपयति आरोपितं च विनाडीपञ्चकं यावत्तथैवावस्थापयति। दशगुर्वक्षरोच्चारणकालः प्राणः षट्प्राणा विनाडी शुद्ध्यशुद्धिनिर्णयकारणं चोक्तम्। तुलितो यदि वर्द्धेत स शुद्धः स्यान्न संशयः। समो वा हीयमानो वा न विशुद्धो भवेन्नर इति। ५५। १००।

धर्माधर्मदिव्यविधिः राजतं कारयेद्धर्ममधर्मं सीसकायसम्। लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ।

अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत्। सितपुष्पस्तु धर्मः स्यादधर्मो ऽसितपुष्पभृत्। एवंविधावुपालिख्य पिण्डयोस्तौ निधापयेत्। गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः। मृद्भाण्डके ऽनुपहते स्थाप्यौ चानुपलक्षितौ। उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ। आवाहयेत्ततो देवांल्लोकपालांश्च पूर्ववत्। धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत्। ततः यदि पापविमुक्तो ऽहं धर्मस्त्वायातु मे करे इत्यभिशस्तोऽभिमन्त्रयेत्। अभियुक्तस्तयोश्चैकं प्रगृह्णीतविलम्बितः। धर्मे गृहीते शुद्धिः स्यादधर्मे तु स हीयते इत्यादिना पितामहेनोक्तः। ५६। १०१।

एवमतितप्ततैलादेः सौवर्णमाषकोद्धरणेन शोध्यस्य करे स्फोटाद्यभावे शुद्धिः अन्यथा त्वशुद्धिः। ५७। १०२।

शोध्यस्य निमज्जनसमये तत्स्थानात्क्षिप्तं शरमादाय तत्पतनस्थाने स्थितो नरो यद्यतिवेगेन शोध्यस्थानमागत्य तच्छिरोतिरिक्तं मुखनासिकादिरूपं तदवयवं न पश्यति तदा स शुद्ध इतरथा त्वशुद्ध इति। एते ऽष्टापि न्यायाः परशुग्रहणन्यायविषये प्रवर्त्तन्ते घटन्यायश्च कोशपानविषये तण्डुलभक्षणविषये ऽपि च वर्त्तते इति बोध्यम्। ५८। १०३।

त्याज्या दुस्तटिनीति न्या०। ५९। १०४।

चौरापराधान्माण्डव्यनिग्रह इति न्या०। ६०। १०५।

काकदधिघातकन्या० यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदं दधिघातकलक्षकं तथा प्रकृते ऽपीत्यर्थः। ६१। १०६।

गणपतिन्या०। ६२। १०७।

तिलतण्डुलन्या० । ६३ । १०८ ।

नीरक्षीरन्या० । ६४ । १०९ ।

वेण्याकाशन्या० । इदं न्यायचतुष्टयं स्वस्थाने व्याख्यातम् । ६५ । ११० ।

येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इति न्या० इदं परार्थानुमाने प्रसिद्धम् । यत्स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानं पञ्चावयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाः तत्र गिरिरग्निमानिति प्रतिज्ञा धूमादिति हेतुः यो यो धूमवान्सो ऽग्निमान्यथा महानस इत्युदाहरणम् । धूमवांश्चायमित्युपनयः । तस्मादग्निमानिति निगमनमिति । साध्यवत्तया पक्षवचनं प्रतिज्ञा पञ्चम्यन्तलिङ्गप्रतिपादकं हेतुः व्याप्तिप्रतिपादकमुदाहरणं पक्षधर्मताज्ञानार्थमुपनयः हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम् । तथा च यथा ऽत्र पक्षस्य साध्यवत्तयोपक्रमस्तत्त्वेनैव चोपसंहार इति तदेव वाक्यार्थस्तथा प्रकृते ऽपीति बोध्यम् । ६६ । १११ ।

संभवत्येकवाक्यत्व इति न्या० । ६७ । ११२ ।

एकवाक्यतापन्नानामितिन्या० । ६८ । ११३ ।

अपन्थानं तु गच्छन्तमिति न्या० । ६९ । ११४ ।

वध्यतां वध्यतामेवेति । ७० । ११५ ।

विषवृक्षो ऽपीति न्या० । ७१ । ११६ ।

यत्प्राये श्रूयतइति । ७२ । ११७ ।

इदं न्यायषट्कं स्वस्थाने संदंशन्यायेन स्पष्टतया प्रतीयते स्वभावतो ऽपि स्पष्टार्थं चेति नेह व्याख्यातम् । ७३ । ११८ ।

तात्स्थ्यात्ताच्छब्द्यमिति न्या० मुद्रिकयोष्ट्रः क्रीतः ।

द्वारात्सुघनपथः पृष्ट इत्यादौ काष्ठपुरुषादीनामुष्ट्रद्वारादिनिष्ठत्वादुष्ट्रद्वारादिशब्दविषयत्वं यथा तथा प्रकृते ऽपीत्यर्थः । यजमानपञ्चमा इडां भक्षयन्तीत्यप्यस्योदाहरणं बोध्यम् । ७४ । ११९ ।

एकं संधित्सतो ऽपरं प्रच्यवतइति न्या० । यथैकं कांस्यपात्रावयवादि संन्धातुमिच्छतो ऽपरं तदत्यन्तानलसंयोगादेः प्रच्यवते । ७५ । १२० ।

सुतजनिमृतिन्यायो ऽपीदृशः । यथा कश्चित्कं चिद्देवमाराध्य ततः पुत्रं लब्ध्वा चान्यपुत्रलाभाय देवान्तरमाराध्य ततस्तं लब्ध्वा तज्जन्मक्षणएव च पूर्वदेवकोपात्पूर्वमरणं तथा प्रकृते ऽपि जातमित्यर्थः । ७६ । १२१ ।

सार्वजनीनस्तुल्यायव्ययन्यायो ऽपीह बोध्यः । ७७ । १२२ ।

पतन्तमनुधावतो बद्धो ऽपि गत इति न्या० । पतन्तं कथं चिज्जालान्निःसृत्योड्डीय गच्छन्तं पक्षिणमनुधावतो जीवान्तकस्य बद्धो ऽपि पक्षी यथा गतस्तथा प्रकृते ऽपीत्यर्थः । ७८ । १२३ ।

श्यालशुनकन्या० । इत्थं हि लौकिकी गाथा कश्चित्कुतुकी स्वसद्मस्थे शुनि श्यालनामसंकेतं कृत्वा स्वस्त्रीकोपोत्पादाय तं गालीर्ददौ सा च तं भ्रातरं मत्वा ऽतिकोपपरीतात्मतया ऽतिदुःखिता बभूवेति । तथा च यथा स्वाभ्रातरि शुनि भ्रातृताभ्रान्तिमत्या भार्यायाः कोपनाय भर्त्रा श्वनिन्दा क्रियते तथा ऽत्यन्ताभिन्ने ऽपि तत्तद्विग्रहावच्छिन्ने परात्मनि भेदभ्रमवतां कोपोत्पादाय शास्त्रेण तदिष्टविग्रहावच्छिन्नेशनिन्दाव्याजेनान्यविग्रहावच्छिन्नेशस्तुतिः क्रियते । अथ वा कार्यब्रह्मणि विष्णवादौ विष्णवा-

दिनामसंकेतं कृत्वा शास्त्रेण तन्न्यूनताद्युक्त्या शिवादिस्तुतिः क्रियतइति भावः । ७९ । १२४ ।

न हि निन्दा निन्दतुं प्रवर्त्तते अपि तु विधेयं स्तोतुमिति न्या० केवलायां निन्दायां प्रयोजनाभावाद् भावाभावपरत्वे वाक्यभेदप्रसङ्गाचेति भावार्थो ऽस्य प्रागेवोक्तः अक्षरार्थस्तु स्पष्टः । ८० । १२५ ।

यत्रोभयोः समो दोष इति न्या० । ८१ । १२६ ।

उपवासाद्वरं भिक्षेतिन्या० । वरमिति सामान्ये नपुंसकम् एवमग्रे ऽपि । ८२ । १२७ ।

शालिसमृद्धौ कोद्रवाशनत्यागन्या० । ८३ । १२८ ।

कूपखानकन्या० । यथा कूपखानके पतितं पङ्कादि कूपान्निःसृतेनाम्भसा प्रक्षाल्यते तथा तत्तद्विग्रहावच्छिन्नेशभेदबुद्धिजो दोषस्तदुपासनाजन्यसुकृतमहिम्नोत्पन्नेनाद्वैतबोधेन समूलं निवर्त्त्यतइति ज्ञेयम् । ८४ । १२९ ।

निम्नगाप्रवाहन्या० । अयं स्वस्थाने स्पष्टं प्रतीयते । ८५ । १३० ।

शते पञ्चाशदितिन्या० । ८६ । १३१ ।

यादृशो यक्षस्तादृशो बलिरिति न्या० । ८७ । १३२ ।

यादृशं मुखं तादृशी चपेटेति न्यायो ऽपीह बोध्यः । ८८ । १३३ ।

मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोतीति न्या० । ८९ । १३४ ।

मरणाद्वरं व्याधिरिति न्यायो ऽपीह ज्ञेयः । ९० । १३५ ।

एकाकिनी प्रतिज्ञा हीतिन्या० । ९१ । १३६ ।

न हि प्रतिज्ञामात्रेणार्थसिद्धिरिति न्यायो ऽपीदृशः

एतयोरर्थैक्ये ऽपि स्वरूपभेदमाश्रित्य भेदेन निर्देश इति बोध्यम् । ६२ । १३७ ।

शतपत्रपत्रशतभेदन्या० । यथा सूच्या पद्मशतपत्रभेदने कालयौगपद्यप्रतीतिर्भ्रमस्तथेत्यर्थः । ६३ । १३८ ।

घट्टकुटीप्रभातन्या० यथा घट्टकुटीस्थेभ्यः करग्राहिभ्यो भीत्या रात्रौ पलायितानां पथित्यजां वणिजां दूरे गत्वा ऽपि यथा भ्रान्तिवशाद् घट्टकुट्यामेव प्रभातोदय इति लोके प्रसिद्धं तथा प्रकृते ऽपि जातमिति तत्रैव स्पष्टम् । ६४ । १३९ ।

वरघाताय कन्यावरणमिति न्या० । अयमेव क्व चिन्न हि वरघाताय कन्यामुद्वाहयन्तीति लिख्यते । ६५ । १४० ।

नष्टाश्वदग्धरथन्या० । द्वौ हि रथिनौ कं चिद् ग्रामं प्रविश्य रथाभ्यामवतीर्याश्वांश्च ताभ्यां मोचयित्वा खट्वादौ निविष्टौ । ततो दैवेन दंदह्यमाने ग्रामे तयोरेकः पश्चादश्वान्निःसारयिष्यामीति धिया रथमादौ निःसारितवान् । अपरस्त्वश्वान् । तावता तस्मिन् स्थले दग्धे एकस्याश्वा नष्टा द्वितीयस्य रथो दग्धः तौ च यथा ऽन्योन्याकाङ्क्षयैकं रथं कृत्वा स्वेष्टदेशं प्रापतुस्तथा ऽर्थवादविधिवाक्ये प्रधानाङ्गवाक्ये चेतरेतराकाङ्क्षयैकवाक्यतां प्राप्य प्रवृत्त्यादि जनयत इति संक्षेपः । ६६ । १४१ ।

यदा तु निराकाङ्क्षे ऽपि वाक्ये आकाङ्क्षामुत्थाप्यैकवाक्यता क्रियते तदा रक्तपटन्यायप्रवृत्तिः । यथा पटो ऽस्तीति वाक्यस्य निराकाङ्क्षस्यापि कीदृश इत्याकाङ्क्षामुत्थाप्य रक्त इत्यनेनैकवाक्यता क्रियते तथा प्रकृतीनां दर्शपूर्णमासादीनां स्वप्रकरणस्थाङ्गैर्निवृत्तोपकाराकाङ्क्षाणामनारभ्याधीताङ्गैर्विकृतीनां चातिदिष्टाङ्गैः परिपू-

र्णानां शरमयादिभिः सहोत्थिताकाङ्क्षाविरहे ऽप्युत्थापिताकाङ्क्षया ऽन्वय इति संक्षेपः । ९७ । १४२ ।

सविशेषणे हि वर्त्तमानौ विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसंक्रामत इति न्या० । घटाकाशमानय न मण्याकाशमित्यानयनविषयौ विधिनिषेधौ विशेष्ये आकाशे बाधाद् घटादिरूपं विशेषणमुपसंक्रामतस्तथा प्रकृते ऽपि । न च निषेधस्य कथं बाधः तस्य प्रसक्तिपूर्वकतया तदभावे ऽनुपपत्तेः । किं चात्र विधिनिषेधशब्दौ भावाभावमात्रबोधकौ तथा च घटाकाशो ऽत्रानीतो न मण्याकाशः घटाकाश उत्पन्नः शरावाकाशो विनष्ट इत्यादौ भावाभावौ विशेष्ये बाधाद्विशेषणमुपसंक्रामतस्तथा प्रकृते ऽपि विशेष्ये बाधाद्विशेषणे तयोः पर्यवसानमित्यर्थः । ९८ । १४३ ।

सावकाशनिरवकाशन्यायः स्वस्थाने स्पष्टः । ९९ । १४४ ।

अहिकुण्डलन्या० । १०० । १४५ ।

प्रकाशाश्रयन्या० । इदं न्यायद्वयं स्वस्थाने व्याख्यातम् । १०१ । १४६ ।

गुडजिह्विकान्या० । यथा तत्कटुताभीत्या निम्बपानमकुर्वाणस्य बालस्य जिह्वायां गुडलेपनं कृत्वा तं निम्बं पाययन्ति तथा ऽर्थवादवाक्यानि कष्टे कर्मण्यप्रवर्त्तमानं पुरुषं स्वर्गाद्यक्षय्यत्वादिकं श्रावयित्वा तस्मिन्प्रवर्त्तयन्तीति संक्षेपः । १०२ । १४७ ।

यत्कृतकं तदनित्यमिति न्या० । १०३ । १४८ ।

नहि दृष्टे ऽनुपपन्नं नामेति न्या० १०४ । १४९ ।

न हि करकङ्कणदर्शनायादर्शापेक्षेति न्यायः । १०५ । १५० ।

प्रत्यक्षे किमनुमानमिति न्यायश्चैतत्कल्पः । १०६ । १५१ ।

भक्षिते ऽपि लशुनइति न्या० १०७ । १५२ ।

रज्जुसर्पन्या० यथा रज्जोर्ज्ञातायाः सर्पाद्यात्मना भानं ज्ञातायास्तु स्वरूपेण तथा ब्रह्मणो ऽनवबुद्धस्य प्रपञ्चत्वेन बुद्धस्य निष्प्रपञ्चत्वेन भानं न मानान्तरविरुद्धमित्यर्थः । १०८ । १५३ ।

नाहमीश्वर इति प्रत्यक्षविरोधपरिहारायौपाधिकाकाशभेदन्यायावतारः । यथौपाधिकाकाशभेदविषयं मानं सविशेषेण हीति न्यायेनोपाधिगोचरं तथा जीवेशभेदप्रत्यक्षादि तदुपाधिभेदविषयमिति न तेन तदैक्यपरागमविरोध इति दिक् । १०९ । १५४ ।

इति वृक्षप्रकम्पनन्यायान्तर्गतास्तैः संगताश्च न्याया व्याख्याताः । कैश्चित्तु प्रचालनेति पठ्यते तदस्तु नामार्थे तु नाणुरपि विशेषो ऽस्ति प्रचलनेत्यपि क चित्पाठः । यत्रान्योन्यविरुद्धानामपि संभूयैककार्यकारित्वं तत्र प्रदीपन्यायावतारः । यथाहि वर्त्तितैले अग्निविरोधिनी अग्न्युपरि तैलपाते ऽग्निनाशात् । वर्त्तिरपि स्वल्पकालेनाग्निनाशिका । स च तस्याः अथ च संभूय प्रकाशलक्षणमेकं कार्यं कुर्वन्ति । तथा सत्त्वरजस्तमांसि परस्परं विरुद्धान्यपि संभूयैकं देहादिकं प्रीत्यादिकं च कार्यं जनयन्ति । तथा हि सत्त्वमेव लघु । तत्र हि कार्योद्गमने हेतुर्धर्मो लाघवं यतो ऽग्नेरूर्द्ध्वज्वलनं जीवानां चोर्द्ध्वं गच्छन्ति सत्त्वस्था इति स्मृतिसिद्धमूर्द्ध्वगमनम् । प्रकाशकं च सत्त्वात्संजायते ज्ञानमिति स्मृतेः । सुखकारणं च सत्त्वं सुखे सञ्जयतीति स्मृतेः । तथा च लघुत्वे सति ज्ञानसुखहेतुत्वं सत्त्व-

लक्षणम्। रज उपष्टम्भकं संश्लेषजनकं सत्त्वतमसी स्वयमक्रियतया स्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते । अवसादात्प्रच्याव्य स्वकार्ये प्रयत्नं कार्येते । चलं च रजः चलत्वं च सक्रियत्वम् । एवं च प्रवृत्तिहेतुत्वं रजसः । तथा च स्मृतिः । रजसो लोभ एव चेति । लोभस्य च प्रवर्त्तकत्वं प्रसिद्धमेव दुःखकारणं च रजः रजः कर्माणि भारतेति स्मृतेः । कर्मणो दुःखहेतुत्वं च सर्वानुभवसिद्धं कष्टं कर्मेति न्यायसिद्धम् । तथा च प्रेरकत्वे सति सक्रियत्वे च सति दुःखहेतुत्वं रजोलक्षणम् । तमस्तु गुरु आवरकं मोहकरं च भवति । तथा च गुरुत्वे सत्यावरकत्वे च सति मोहकत्वं तल्लक्षणम् । एतेनैतेषां विरुद्धत्वं प्रतीयते विद्यते चैषां संभूयैककार्यजनकत्वम् । तत्र रज उभयोः स्वकार्ये प्रवर्तकं तच्च परितस्त्रैगुण्यं चालयद्गुरुणा आवृण्वता तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यते ततस्ततो व्यावृत्त्येति तमसो नियामकत्वम् । सत्त्वं च प्रवृत्तिविषयद्रव्याद्यवभासकम् । न हि मृद्धटादिज्ञानं विना तद्विषया प्रवृत्तिः । तस्मात्त्रयाणामन्योन्यं विरुद्धानामपि संभूयैकप्रवृत्त्यादिकार्यहेतुत्वम् । तथा देहादिषु सर्वकार्येष्वपि ज्ञेयम् । तथा हि सुखदुःखमोहाः परस्परं विरोधिनः स्वानुरूपाणि सुखादीनि निमित्तानि कल्पयन्ति । तद्यथा एकैव नाम्ना भामती स्त्री रूपयौवनादिसंपन्ना धवं सुखाकरोति दुःखाकरोति च सपत्नीः मोहयति च नरान्तरम् । तत्कस्य हेतोः तं प्रति तस्यास्तत्तद्रूपसमुद्भवात् । एतेन भामतीन्यायो व्याख्यातः न चैकस्य त्रिरूपत्वमयुक्तम् । वह्निन्यायेनोपपत्तेः यथा ह्येकस्याग्नेर्दाहकत्वं पाचकत्वं प्रकाशत्वं च तथा सत्त्वादेरपि किं न स्यादिति । कार्यजातं च कारणे सदेव कूर्माङ्गन्यायेन निःसरति पुनश्च तत्रैव लीयते ।

यथा कूर्मदेहे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते इदं कूर्मशरीरमेतान्येतस्याङ्गानीति। एवं निविशमानानि तत्राव्यक्तीभवन्ति । तथा मृत्पिण्डाद्धेमपिण्डाद्वा घटमुकुटादीनि इति प्रदीपन्यायः ११० । १५५ ।

कूर्माङ्गन्यायश्च तत्राद्यो निगदव्याख्यातः शिष्टं न्यायत्रयं तु स्वस्थाने व्याख्यातम् । १११ । १५६ ॥

वातादिन्यायो ऽपीह बोध्यः । वातपित्तश्लेष्माणो हि अन्योन्यविरोधिनो ऽपि देहधारणलक्षणैककार्यकृत इति प्रसिद्धम् । ११२ । १५७ ॥

भ्वादिन्यायस्तु यदा भूसत्तायामित्यादयो धातवो गृह्यन्ते तदैकस्योपाधिभेदेन नानात्वविवक्षायां प्रवर्त्तन्ते । यथैक एव धातुरुपसर्गप्रत्ययरूपोपाधिभेदेन नानात्वं भजति तद्यथा करणं क्रिया कर्त्तेत्यादौ प्रत्ययभेदेन पराभवो ऽनुभव इत्यादौ चोपसर्गभेदेन रूपार्थभेदः प्रतीयते तथैकमेव ब्रह्मोपाधिभेदेन तानेवावभासतइति । यदि तु भ्वादिशब्देन पृथिव्यादयो विवक्षितास्तदा तूक्तविषय एवास्य प्रवृत्तिः प्रसिद्धं हि परस्परविरुद्धानामपि तेषां संभूयैककार्यकारित्वमिति भ्वादिन्यायः । ११३ । १५८ ॥

यत्रोभयोरुपकार्योपकारिभावेनान्योन्यापेक्षया संबन्धे सति कार्योदयस्तत्रान्धपङ्गुन्यायः । यथा हि कश्चित्पुरुषो दृक्शक्तिसंपन्नः प्रवृत्तिविहीनः पङ्गुरन्यं पुरुषं प्रवृत्तिमन्तं दृक्शक्तिरहितमन्धमाश्रित्य प्रवर्त्तयति किंचित्फलमुद्दिश्य । तथा चेतनः पुरुषः स्वयमप्रवर्त्तमानः प्रवृत्तिशक्तिमदचेतनं प्रधानं प्रवर्त्तयति तत्र प्रधानं स्वकर्मकपुरुषकर्तृकदर्शनार्थं पुरुषमपेक्षते भोग्यं हि प्रधानं न च भोक्तारं विना भोग्यस्य भोग्यत्वं संभवतीति युक्ता ऽस्य

भोक्त्रपेक्षा । पुरुषस्तु मोक्षार्थं प्रधानमपेक्षते । तथा हि भोग्येन हि प्रधानेन संबद्धः पुरुषस्तद्गतं दुःखत्रयमात्मन्यभिमन्यमानः मोक्षं प्रार्थयते स च सत्त्वपुरुषान्यताख्यातिनिबन्धनः न च सा प्रधानं विनेति भवति पुरुषस्य मोक्षाय प्रधानापेक्षा । अनादित्वाच्च संबन्धपरंपराया भोगाय संबद्धो ऽपि मोक्षाय पुनः संयुज्यतइति युक्तम् । यथा चान्धपङ्गुसंयोगः स्वजन्यगमनादिकं विना नेष्टफलाप्तये इति स एव तदर्थं गमनादिकमुत्पादयति तथा प्रकृतिपुरुषसंबन्धो ऽपि न भोगाय न मोक्षाय च पर्याप्त इति स एव तदर्थं करोतीति दिक् । ११४ । १५९ ॥

ननु सांख्यैः प्रधानस्य स्वतन्त्रस्य प्रवृत्त्युपगमात् पुरुषस्य च प्रवर्त्तकत्वास्वीकारात् तथा च तेषामपसिद्धान्तः स्यात् कथं चोदासीनः पुरुषः प्रधानं प्रवर्त्तयेत् । पङ्गुरपि ह्यन्धं वागादिभिः प्रवर्त्तयति । नैवं पुरुषस्य कश्चित्प्रवर्त्तनव्यापारो ऽस्ति निष्क्रियत्वान्निर्गुणत्वाच्चेति शङ्कानिरासाय लोहचुम्बकन्यायो ऽवतरति । यथा चुम्बकमणिः स्वयमप्रवर्त्तमानो ऽपि लोहं प्रवर्त्तयति तथा पुरुषः प्रधानं प्रवर्त्तयिष्यतीति । अयं न्यायो ब्रह्मवादिमते ऽपि प्रवर्त्तते । इयांस्तु विशेषः यद्ब्रह्मवादिभिरनिर्वचनीयस्याध्यासिकस्य मायाब्रह्मसंबन्धस्याङ्गीकारान्न तन्मते को ऽपि दोषः ब्रह्मणि प्रवर्त्तकत्वस्याध्याविद्यकत्वाङ्गीकारान्न कौटस्थ्यहानिरपि । सांख्यमते तु चुम्बकस्यानित्यसंनिधिरेव व्यापारः प्रधानपुरुषसन्निधेस्तु नित्यत्वेन व्यापारत्वायोगः । तुष्यतु दुर्जन इति न्यायान्नित्यस्यापि व्यापारत्वोपगमे प्रधानप्रवृत्त्यविच्छेद इत्यादयो दोषा वज्रलेपवदनिवार्या इति दिक् । ११५ । १६० ॥

तुष्यत्विति न्यायः प्रासङ्गिकः । ११६ । १६१ ॥

इति सकलकल्याणगुणभूरुहारण्यश्रीनानकसद्वंशसन्मौक्तिकश्रीरामदयालुशिष्येण सोमवंशीयबिन्दरायकुलोत्तंसश्रीगुलाबरायवर्मात्मजेनोदासीनावस्थेन रघुनाथवर्मणा विरचिते लौकिकन्यायसंग्रहे प्रमेयनिरूपणपरः पूर्वभागः ।

अथ प्रमाणनिरूपणप्रचुरो भागः प्रारभ्यते । अत्रैव च प्रसङ्गात्पूर्वोक्तार्थो ऽपि दृढीक्रियते । यदा हि तरति शोकमात्मविदित्यादौ प्राचीनतार्किकमतमाश्रित्याखिलपदार्थस्मरणाद्युगपदेव विशेष्ये विशेषणं तत्र विशेषणान्तरमिति न्यायेन सर्वपदार्थानामन्योन्यं क्रियाकर्मभावेनान्वयरूपः शाब्दबोधः स्वीक्रियते तदा खलेकपोतन्यायो ऽवतरति । यथा ऽऽहुः वृद्धा युवानः शिशवः कपोताः खले यथा ऽमी युगपत्पतन्ति । तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्तीति । अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यम् । न चोत्तरपदार्थस्मरणेन पूर्वपदार्थस्मरणनाशात्कथं युगपत्सर्वपदार्थस्मरणमिति शङ्क्यम् । प्रत्येकपदार्थानुभवजन्यसंस्कारैरन्त्यस्य तावद्विषयकस्मरणस्योदयसंभवात् । एतेन विशेष्ये विशेषणमिति न्यायो ऽपि व्याख्यातः । यदि तु स्वार्थोपस्थितिविषयो भवति तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यते । अनन्तरं च महावाक्यार्थबोध इति नवनैयायिकमतमाश्रित्य विशिष्टस्य वैशिष्ट्यार्थाकाङ्क्षितं योग्यं च यद्यत्स्वमिति न्यायेन शाब्दबोधो ऽङ्गीक्रियते तदा राजपुरप्रवेशन्यायः प्रवर्त्तते । तत्र हि क्रमेणैव बहूनां पुरुषाणां प्रवेशो भवति न युगपत् । अस्मिन्मते पूर्वोक्तं समूहालम्बनात्मकं स्मरणं विना ऽपि निर्वाह इति संक्षेपः ३ ।

अत्र विशिष्टवैशिष्ट्यन्यायो व्याख्यातः । ४ ।

नाज्ञातविशेषणा विशिष्टबुद्धिर्विशेष्यं संक्रामतीत्यपि न्यायः पूर्वैरुदाहृतः विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वान्न तदन्तरेण तत्सिद्धिः । न हि दण्डज्ञानं विना दण्डीति ज्ञानं संभवति न चाज्ञातविशेषणं तद्विशेष्यं विषयीकरोतीति तदर्थः । ५ ।

यत्रोभयकोटिकसंशये एकत्र बह्वर्थहानिः द्वितीयस्वीकारे त्वेकार्थहानिस्तत्र द्वितीयपक्षः स्वीकर्त्तव्य इति विवक्षायां त्यजेदेकं कुलस्यार्थे इति न्यायः प्रसरति । तद्यथा कठवाक्यम् । आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । सो ऽध्वनः परमाप्नोति तद्विष्णोः परमं पदमित्यनियतेन्द्रियादेः पुंसः संसारित्वमन्यस्य च परं पदं श्रावयित्वा किं तदित्याकाङ्क्षायां तेभ्य एवेन्द्रियादिभ्यः परमात्मानं विष्णोः पदं दर्शयति । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किं चित्सा काष्ठा सा परा गतिरिति । तत्र संशयः । किमव्यक्तशब्देन प्रधानमुच्यते उत पूर्ववाक्यसंदर्भे प्रकृतं शरीरमिति । तत्र द्वितीयपक्षस्वीकारे ऽव्यक्तपदमुख्यवृत्तिमात्रत्यागः प्रसज्यते । अत्र हि विषं मृत्युरिति न्यायात्प्रकृतिवाचिशब्देन विकारो लक्ष्यते । न च कथं देहस्य महतः परत्वम् । अविद्यानिष्ठपरत्वस्यात्रोपचारात् । पूर्वकल्पस्वीकारे तु परिशेषाद् न्याय्यत्वेन प्राप्तग्रहस्य शरीरस्य परित्यागः प्रसज्यते पूर्ववाक्येष्वश्रुतस्य प्रधानस्य परिग्र-

हश्च शरीरस्य। किंच सांख्यैः प्रकृतिपुरुषविवेकान्मोक्षं वदद्भिः प्रकृतिरपि तदर्थं ज्ञेयेति स्वीक्रियते न चात्राऽव्यक्तं ज्ञेयत्वेनोच्यते। तथा च ज्ञेयत्वावचनानुसारेणाऽव्यक्तपदेन न प्रधानं ग्रहीतुं शक्यम्। तद्ग्रहे तु तदनुसारित्वत्यागः। किंच कठवल्ल्यामग्निजीवपरमात्मनामेव पूर्वोत्तरवाक्यपर्यालोचनया वक्तव्यत्वेनोपन्यासस्तद्विषय एव प्रश्नश्च दृश्यते न प्रधानस्य येनास्याऽव्यक्तपदवाच्यत्वं स्यात्। तथा चैतदनुसारेणापि नेदमव्यक्तपदवाच्यं तदुपगमे तु तदनुसारित्वत्यागोऽपि प्रसज्यतइति। ६।

विषं मृत्युरिति न्यायोऽत्र प्रासङ्गिकः। १। ७।

लाङ्गलं जीवनमिति। २। ८।

आयुर्घृतमिति। ३। ९।

दधिपयसी प्रत्यक्षो ज्वर इति च न्यायोऽनेन तुल्यः। ४। १०।

यस्तु त्यजेदेकमिति न्यायं नानुसरति सः अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वमिति न्यायविषयतां नातिवर्त्तते। ७। ११।

एकस्मिन्साध्ये ऽनेकेषु साधनेषु सत्स्वप्यादावेकस्मिन्प्रयुक्ते सति साध्यसिद्धावन्यप्रयोगे ऽर्थाभावात्तत्स्वयमेव निवर्त्तते। एवं कस्य चित्प्रयोगे चेच्छैव नियामिकेति विवक्षायामशोकवनिकान्यायः प्रयुज्यते। यथा रावणो लङ्कायां सीतां नीत्वा राक्षसीभ्य आज्ञप्तवान्। अशोकवनिकायां स्थाप्येति। ताश्च तत्र बह्व्यः सन्ति तत्रैकस्यां स्थापिता चेत्तावतैव तदाज्ञायाः परिपालितत्वात्सर्वत्र स्थापयितुमशक्यत्वाच्चेतरत्र स्थापनं स्वयमेव निवर्त्तते।

के चित्तु यथा रावणेन सीता नीता चेदशोकवनिकायामेव कुतः स्थापिता नान्यत्रेत्यत्र रावणेच्छैव निया-

मिका तावतैव लङ्कायां तदवस्थानसिद्धेः सर्वत्र स्थापना-संभवाच्चान्यत्र स्थापनं स्वयमेव निवर्त्ततइति न्यायार्थमाहुः । सर्वथा ऽपि प्रकृतोदाहरणसंगतेर्न क्षतिः । तथा ऽयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वात्पटान्तरवदित्यत्रावयवित्वेन स्वाधिष्ठानवृत्त्यत्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वरूपसाध्ये सिद्ध दृश्यत्वादिति हेतुर्विद्यमानो ऽपि तत्प्रयोगस्य पिष्टपेषणन्यायेनायोग्यत्वात् मिथ्यात्वस्य सिद्धत्वेन साध्यत्वाभावाच्च स्वयमेव निवर्त्तते । एवं कस्य चित्प्रयोगे चेच्छैव नियामिकेति दिक् । ८ । १२ ।

अत्र पिष्टेति प्रासङ्गिकः १ । १३ ।

मृतमारणन्यायो ऽपीह बोध्यः । २ । १४ ॥

जलमन्थनन्या० । ३ । १५ ।

काकदन्तपरीक्षान्या० ४ । १६ ॥

गर्दभरोमगणनन्या० । इदं न्यायत्रयं वैयर्थ्यमात्रे बोध्यम् । ५ । १७ ॥

एवं पटे मिथ्यात्वे निश्चिते घटादिषु स्थालीपुलाकन्यायेन तन्निश्चेयम् । पुलाकाः सूक्ष्मधान्यविशेषाः यथा प्रज्वलितचुल्ल्यधिरोहितस्थाल्यन्तर्गतेषु एकस्मिन्पक्के निश्चिते सर्वे पक्का इति निश्चीयन्ते तद्वत्प्रकृते ऽपीत्यर्थः ६ । १८ ॥

अनेकेषु वाक्येषु पदेषु वा व्याख्येयेषु प्रथमपठितमपि वाक्यं पदं वा बहु वक्तव्यं परित्यज्य मध्ये अन्ते वा पठितं स्वल्पवक्तव्यं पूर्वं व्याख्यायते यत्तत्सूचीकटाहन्यायेनेति ज्ञेयम् । यथा लोहकारं प्रति पूर्वं कश्चित्तेन कटाहोत्पादनार्थी आगतः पश्चात्सूच्युत्पादनार्थी प्राप्तः । तत्र यथा लो-

हकारः प्रथमं कर्त्तव्यत्वेन प्राप्तमपि कटाहं बहुकालसाध्यत्वात्परित्यज्य पश्चात्कर्त्तव्यतया प्राप्तामपि स्वल्पकालसाध्यां सूचीं पूर्वमुत्पादयति तथा प्रकृते ऽपि १० । १९ ॥

उद्देश्यविधेयार्थानां संख्यासाम्ये यथाक्रमं संबन्ध इति विवक्षायां यथासंख्यन्यायो यथासंख्यमनुदेशः समानामिति पाणिनिसूत्रसिद्धः प्रयुज्यते । यथा टाङसिङसामिनात्स्या इत्यादिषु पाणिनीयेषु सूत्रेषु टाङसिङसादीनुद्दिश्येनात्स्यप्रभृतयो विधीयन्ते ते च यथाक्रमं प्रथमः प्रथमेन द्वितीयो द्वितीयेनेत्यन्वयं प्राप्नुवन्ति तथा द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं चेत्युद्दिश्य विधीयते अथात आदेशो नेति नेतीति । तत्र हि क्रमेण मूर्त्तयोर्निषेधद्वयमन्वेति । अन्यथोभयत्र निषेधद्वयान्वये मूर्त्तामूर्त्तयोरनिषेधप्रसङ्गेन द्वैतापत्तिः स्यात् ब्रह्मण्यपि वा निषेधान्वये शून्यवादप्रसङ्गः । अयं च न्यायः उद्देश्यविधेयहीनेष्वपि समसंख्येषु क चित्प्रवर्त्तते । यथा भोज्यान्नास्ते दोषवन्तःसमासमाभ्यां विषमसमे पूजात इति स्मृतौ । न ह्यत्रोद्देश्यविधेयभावो ऽस्ति विद्यते च यथासंख्यमन्वयः एवं पृथिव्यम्भसोर्गन्धरसावित्यादावपि बोध्यम् ११ । २० ॥

सर्वसाधारण्येन प्राप्तो ऽर्थ उच्यमानो यत्र स्वेन सह प्राप्तेतरपरिसंख्यायां पर्यवस्यति तत्राऽभक्षन्यायावतारः । यथा ऽभक्षो ऽयं द्विज इत्युक्तिरभक्षणस्यान्नादिभक्षेष्वपि सत्त्वादस्मिंस्तदितरभक्षणनिषेधे पर्यवस्यति १२ । २१ ॥

वायुभक्षन्या० १३ । २२ ॥

कुम्भीधान्यन्यायश्चापीदृशः । यथा कुम्भीधान्याय विप्रायेयं धेनुर्देयेत्यत्र विशेषणसाफल्याय कुम्भ्यां धान्यं यस्येति विगृह्यते । तथा तं त्वौपनिषदं पुरुषं पृच्छामीत्यत्रौ-

पनिषदमिति उपनिषन्मात्रगम्यमिति विगृह्यताम् । अन्यथा विपुलधान्यराशिमतामपि सर्वेषां विप्राणां कुम्भ्यां धान्यसंभवेन कुम्भीधान्यायेति विशेषणवैयर्थ्यवज्जीवतदुपाध्यादेरप्यौपनिषदबोधविषयत्वसंभवेन विशेषणवैयर्थ्यापातात् । एवं चोदनालक्षणो ऽर्थो धर्म इत्यादावपि बोध्यम् १४ । २३ ॥

यत्र सामान्यवाचकं पदं स्वयुक्तविशेषवाचकपदबलात्तदर्थान्यविशेषपरतया नीयते तत्र ब्राह्मणपरिव्राजकन्यायः यथा ब्राह्मणा भोज्यन्तां परिव्राजकाश्चेत्यत्र परिव्राजकानामपि ब्राह्मणत्वाद्ब्राह्मणपदं परिव्राजकेतरपरम् । तथा एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति श्रुतावन्तरिन्द्रियस्य मनसः समभिव्याहारात्सर्वेन्द्रियाणीति पदं तदन्यसर्वेन्द्रियपरम् । इदमुदाहरणं मनइन्द्रियत्ववादिमते । मतान्तरे तु तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत- इत्यादि बोध्यम् १५ । २४ ॥

ब्राह्मणवसिष्ठन्यायो ऽपीह बोध्यः । ब्राह्मणा आयाता वसिष्ठो ऽप्यायात इत्यत्रापि सामान्यपदस्य विशेषपदसमवधानात्तदितरविशेषपरत्वात् १६ । २५ ॥

गोबलीवर्दन्यायो ऽपीदृशः । एतावांस्तु विशेषः यद्यत्र विशेषेणोपात्तस्य प्राशस्त्यमभिप्रेतं तत्र पूर्वन्यायद्वयप्रवृत्तिः यत्र तन्नास्ति तत्रैतस्य प्रसिद्ध्यप्रसिद्धिनिबन्धनश्चायं गोपदस्य हि स्त्रीव्यक्तौ प्रसिद्धिर्न पुंव्यक्तौ । अत एव गामानय बलीवर्दं चेति प्रयुज्यते । उदाहरणं तु देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः । प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तमित्यादि । अत्र हि विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः । पिशाचो गुह्यकः सिद्धो भूतो ऽमी देवयोनय

इत्यभिधानात्सिद्धादीनामपि देवत्वेन देवपदस्य सिद्धादीतरदेवपरत्वं विद्यते। न चेन्द्राद्यपेक्षया तेषां प्राशस्त्यमस्ति न च देवपदस्य पिशाचादौ प्रसिद्धिरस्तीति सर्वमनवद्यम्। १७। २६।

विशिष्टवाचकानामपि पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायां करिबृंहितन्यायः। बृंहितं करिगर्जितमिति कोशाद्विशिष्टवाचकस्य बृंहितपदस्य तत्र स द्विरदबृंहितशङ्कीत्यादौ विशेषणवाचिद्विरदपदसमवधानाद्यथा गर्जितरूपविशेष्यमात्रपरत्वं तथा स्वप्ने स जीवः सुखदुःखभोक्तेति श्रुतौ सुखदुःखसाक्षात्कारकर्तृत्वस्य भोक्तृत्वाद्विशिष्टवाचकस्यापि भोक्तृपदस्य सुखदुःखशब्दसमभिव्याहारात्साक्षात्कर्तृरूपविशेष्यमात्रपरत्वमिति १८। २७।

एतेन न्यायषट्कं व्याख्यातं बोध्यम्। गजघटान्या० १९। २८।

नीलेन्दीवरन्या० २०। २९।
पर्वताधित्यकान्यायः २१। ३०।
पर्वतोपत्यकान्यायः २२। ३१।
वाजिमन्दुरान्यायः। २३। ३२।

मृगवागुरान्यायश्च। करिणां घटना घटा इन्दीवरं नीलेऽस्मिन्। उपत्यकाद्रेरासन्ना भूः तस्योर्द्ध्वमधित्यका वाजिशाला तु मन्दुरा। वागुरा मृगबन्धनीति कोशाद्विशिष्टवाचकानामपि घटादिपदानां नैवान्यत्र मदान्धसिन्धुरघटा नीलेन्दीवरलोचनः अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लमित्यादौ विशेषणपदसमभिव्याहाराद्विशेष्यमात्रपरत्वादिति। २४। ३३।

यत्र विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधस्तत्र येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायोऽवतरति। प्राप्तइति भावे क्तः। येन नाप्राप्तइत्यस्य यत्कर्त्तृकावश्यप्राप्तावित्यर्थः नञ्द्वयस्य प्रकृत्यर्थदार्ढ्यबोधकत्वात्। सामान्यशास्त्राप्राप्तियोग्येऽचारितार्थ्यं हि विशेषशास्त्रस्य बाधकत्वे बीजम्। ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषृतामित्यत्र यथा भोजनकर्त्तृकावश्यप्राप्तौ परिवेषणविधेरारब्धत्वात्तेन सामान्यशास्त्राप्राप्तियोग्ये शूद्रादावचरितार्थेन विशेषविधिना स्वोद्देश्यमाठरत्वादिविशेषधर्मावच्छिन्नवृत्तिब्राह्मणत्वलक्षणसामान्यधर्मावच्छिन्नोद्देश्यकस्य ब्राह्मणा भोज्यन्तामिति शास्त्रस्य बाधः। तथा न हिंस्यात्सर्वा भूतानीति हिंसानिषेधकर्त्तृकावश्यप्राप्तावग्नीषोमीयं पशुमालभेतेत्याद्याग्नीषोमीयादिपश्वालम्भनविधेरारब्धत्वात्तेन सामान्यशास्त्राप्राप्तियोग्ये पुरोडाशादावचरितार्थेन विशेषविधिना स्वोद्देश्याग्नीषोमीयत्वादिविशेषधर्मावच्छिन्नवृत्तिभूतत्वलक्षणसामान्यधर्मावच्छिन्नोद्देश्यकस्य न हिंस्यादिति शास्त्रस्य बाधः। एवं वाजपेये सुराग्रहादिष्वपि द्रष्टव्यम्। न सुरां पिबेदित्यादिनिषेधस्य विहितेतरविषयत्वात्। तथा वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेदित्यत्रापि ज्ञेयम्। न च तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैरिति प्रायश्चित्तविधानात्तस्य निषिद्धत्वं निर्धार्यते इति शङ्क्यं निषिद्धत्वनिर्धारणात्प्रायश्चित्तित्वनिश्चये प्रायश्चित्तविधानाच्च निषिद्धत्वनिर्धारणेऽश्वभृत्यन्यायेनान्योन्याश्रयान्निषिद्धत्वानिर्णये प्रायश्चित्तानिर्णयात्। तद्विधानस्य त्वश्वग्रहेष्टिविधानवन्नैमित्तकत्वेनाप्युपपत्तेरनृतजाघनाशा-

र्थत्वकल्पनायोगात्। विधित एव प्रवृत्त्युपगमेनात्र रागतोऽप्रवृत्तेरिति दिक्। इति येन नाप्राप्तिन्यायः। २५। ३४।

अत्र प्रासङ्गिकोऽश्वभृत्यन्यायः। यथा कस्यायमश्वो यस्याहं भृत्यः त्वं भृत्यः कस्य यस्यायमश्व इत्यत्र यथा न वस्तुनिर्णयस्तथा प्रकृतेऽपीत्यर्थः। १। ३५।

यत्रान्योन्याश्रयो न दोषाय यथा देहादृष्टादौ तत्र बीजवृक्षन्यायः। २। ३६।

अण्डकुक्कुटीन्यायश्च प्रवर्त्तते। अयं ह्युत्पत्तावन्योन्याश्रयः प्रवाहानादित्वान्न दोषावहः। ३। ३७।

यत्रोद्वाह्योद्वाहकभावे स न दोषस्तत्र नौनाविकन्यायः। ४। ३८।

आत्माश्रयस्य दोषत्वविवक्षायां न हि सुशिक्षितोऽपि वटुः स्वस्कन्धमारोढुं पटुरिति न्यायः प्रवर्त्तते। ५। ३९।

कर्त्तारं विना करणस्य कार्याक्षमत्वविवक्षायां तु न हि सुतीक्ष्णाऽप्यसिधारा स्वयं छेत्तुमाहितव्यापारेति न्यायः। इति येन नाप्राप्तिन्यायान्तर्गतास्तेन संगताश्च न्यायाः। ६। ४०।

तक्रकौण्डिन्यन्यायोऽपि सामान्यशास्त्रप्राप्तस्य विशेषशास्त्रेण बाध एव प्रवर्त्तते। यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र कौण्डिन्यस्यापि ब्राह्मणत्वात्सामान्यशास्त्रेणास्यापि दधिदानं प्राप्तं तच्च विशेषविहितेन तक्रदानेनापोद्यते। एवमाहवनीये जुहोतीति सामान्यशास्त्रप्राप्तस्याहवनीयाधिकरणकहोमस्य पदे जुहोतीति विशेषविहितेन पदहोमेन बाधः। तथा यतो वा इमानि भूतानि जायन्ते इति श्रुत्या बोधितस्य भूतेषु साक्षाद्ब्रह्मकार्यत्वस्य तस्माद्वा एतस्मादात्मन आकाशः

संभूतः आकाशाद्वायुरित्यादिविशेषश्रुत्या बाधः । न चैकविज्ञानात्सर्वविज्ञानश्रुतिविरोधः व्योमादेर्ब्रह्मानन्यतया तद्भावापन्नब्रह्मजन्यत्वेन तद्विज्ञानाद्विज्ञानसंभवात्। न चैवमेतयोर्वाक्ययोर्नैतन्न्यायोदाहरणत्वम् । आकाशादिभावानापन्नब्रह्मकार्यत्वस्य सामान्यश्रुत्या बोधितस्य बाधान्न्यायसंगतेः । न चानयोर्न्याययोः साङ्कर्यं शङ्क्यम् । विरोधात्सामान्यशास्त्रस्य विशेषशास्त्रेण बाधे पूर्वन्यायस्य फलसाम्यात्तेन तस्य बाधे तूत्तरस्य प्रवृत्तेः समकालिकभोजनपरिवेषणयोर्हिंसातत्प्रतिषेधयोश्च विरोधः स्पष्टः । दधितक्रयोस्त्वोदनसेकरूपस्य तृप्तिरूपस्य वा फलस्य साम्यात् बाध्यबाधकता । दधिफलस्य तक्रेणैव जनितत्वाद् दध्नो निवृत्तिः । अत एव ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डिन्यायेत्यत्र न बाध्यबाधकभावः । एवं होमयोरपि क्रतूपकारलक्षणस्य फलस्यैक्याद् बाध्यबाधकतेति तक्रकौण्डिन्यन्यायः । २६ । ४१ ।

केचिन्न्याया व्याकरणमात्रगोचरास्तदुदाहरणस्यान्यशास्त्रे ऽनुपलम्भाद् व्याकरणोदाहरणस्य त्वत्रानुपयुक्तत्वात्तत्स्वरूपं बीजं च प्रदर्श्यते ।

पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायः । अवश्यं स्वपरस्मिन् बाध्ये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्यें पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः । आकाङ्क्षानिवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् । २७ । ४२ ।

मध्ये ऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति न्यायः । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्य बीजम् । २८ । ४३ ।

पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा इति न्यायः । लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चये उत्सर्गेण तत्तल्लक्ष्यं संस्करोति अन्यथा विकल्पापत्तेरित्यर्थः । अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । २९ । ४४ ।

प्रकल्प्यापवादविषयं तत उत्सर्गो ऽभिनिविशतइति न्यायः । तत इत्यस्यापवादशास्त्रपर्यालोचनात्प्रागपीत्यर्थः प्रकल्प्येत्यस्य परित्यज्येत्यर्थः । ततश्च लक्ष्यैकचक्षुष्कस्तत्तच्छास्त्रपर्यालोचनं विना ऽप्यपवादविषयं परित्यज्योत्सर्गेण संस्करोतीति न्यायार्थः ।

ये त्वाहुर्येन नाप्राप्तन्याये प्रदर्शितविधिनिषेधवाक्ययोर्न सामान्यविशेषभावः न हि यथा होममात्राधिकरणतया प्राप्तस्याहवनीयस्य विशेषविहितेन पदहोमेन संकोचस्तथेह हिंसामात्रविषयतया निषेधः प्रवर्त्तते येन विशेषणसंकोचः स्यात्किं तु रागप्राप्तहिंसायामेव तावता ऽपि निषेधोपपत्तौ न क्रतुप्रकरणे ऽपि निषेधप्रवृत्तिः प्रमाणाभावात् प्रत्युत पदार्थाप्रवृत्तिस्तदर्थः प्रतिषेध इति न्यायेनानृतवदनादिनिषेधस्येवास्यापि क्रत्वर्थत्वं स्यात्तथा चानयोर्विधिनिषेधयोर्ग्रहणाग्रहणवद्विकल्पः स्यादित्यनर्थपरंपरापत्तिरिति तेषां तदप्यस्योदाहरणं बोध्यम् । ३० । ४५ ।

उपजनिष्यमाणनिमित्तो ऽप्यपवादः संजातनिमित्तमप्युत्सर्गं बाधतइति न्यायः । अस्य तु भवति शास्त्रे ऽप्युदाहरणम् । तथा हि । ज्योतिष्टोमे बहिष्पवमानाख्यस्तोत्रं कर्त्तुं क्रमेण पृष्ठतो हस्तेन संस्पृश्योपसर्पतामृत्विजां मध्ये उद्गातुरपच्छेदे यद्युद्गाता ऽपच्छिद्येतादक्षिणं

यज्ञमिष्ट्वा तेन पुनर्यजेतेति श्रुतिजन्या तन्निमित्ता प्रायश्चित्तकर्त्तव्यताबुद्धिः पश्चात्प्रतिहर्त्रपच्छेदे यदि प्रतिहर्त्ता ऽपच्छिद्येत सर्ववेदसं दद्यादिति श्रुतिजन्यया प्रायश्चित्तान्तरकर्त्तव्यताधिया बाध्यते । अत्रोपजनिष्यमाणनिमित्तान्तरे क्रतौ पूर्वनिमित्तकप्रायश्चित्तस्याङ्गत्वादि प्रागेव बाध्यते अन्यथा ऽस्य निमित्तान्तररहितक्रतुवत्तदननुष्ठाने वैकल्यप्रसङ्गादुत्सर्गापवादत्वं चात्र बाध्यबाधकभावेनोपचारादिति संक्षेपः । ३१ । ४६ ।

पूर्वात्परबलीयस्त्वन्यायः । ३२ । ४७ ।

स्थावरजङ्गमविषन्यायश्चेह बोध्यः । रजतादिज्ञानतद्बाधज्ञानयोः सर्पवत्सनाभादिरूपजङ्गमस्थावरविषयोश्चोत्तरेण पूर्वबाधः प्रसिद्धो यथा तथा प्रकृते ऽपि । इयांस्तु विशेषः यत्पूर्वस्मिन्पूर्वोत्तरभावस्य नियतत्वाद्बाध्यबाधकभावो ऽपि नियतः । अतस्तत्र तादृशयोर्जगतः सत्यत्वमिथ्यात्वज्ञानयोरुदाहरणत्वं बोध्यम् । द्वितीये त्वनियतपूर्वापरभावप्रयुक्तबाध्यबाधकभावस्यानियतत्वात्तादृशयोरुद्गातृप्रतिहर्त्रपच्छेदयोरुदाहरणत्वमिति । ३३ । ४८ ।

अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायः । अयमपि व्याकरणमात्रगोचरः । न हन्यादित्यादावव्यवधानेन नञर्थस्य धात्वर्थेनान्वयाद्यजेन्न हन्यादित्यस्योदाहरणमिति चेन्नाव्यवधाने ऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयानुपपत्तेः । एवं चाव्यवधाने ऽपि नञर्थो न धात्वर्थेन संबध्यते किं तु प्रत्ययार्थेन तस्य प्राधान्यादिति दिक् । ३४ । ४९ ।

एवमन्ये ऽप्यव्ययिकादयो न्याया व्याकरणमात्रगोचराः सन्ति दिङ्मात्रमिह दर्शितम् ।

कृदभिहितो भावो द्रव्यवत्प्रकाशते इति न्यायस्य तु प्रमाणप्रमेयेति गोतमीयसूत्रान्तर्गतमधिगम इति पदमुदाहरणं बोध्यम् । तथा च तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यस्याधिगम्यमानं निःश्रेयसं तत्त्वज्ञानाद्भवतीत्यर्थः । अन्यथा ज्ञानस्य मोक्षं प्रत्यहेतुत्वापत्तेरिति । ३५ । ५० ।

तक्रकौण्डिन्यन्याये प्रदर्शितायास्तस्माद्वा एतस्मादात्मन इति श्रुतेर्वीचीतरङ्गन्यायोदाहरणत्वमपि बोध्यम्। तथा हि । वीचीतरङ्गशब्दौ हि पर्यायौ । भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरिति कोशात् । एवं च यथा वाय्वादिसंयुक्ताद् ह्रदाद्वीचिर्जायते तद्भावापन्नाच्च तस्मात्तरङ्गान्तरं तद्भावापन्नाच्च तस्मात्तरङ्गान्तरम् । तथा मायोपहिताद्ब्रह्मणः खमुत्पद्यते तद्भावापन्नाच्च तस्माद्वायुरित्यादि । तार्किकास्तु शब्दोत्पत्तावेतमवतारयन्ति भेरीदेशे जातः शब्दो वीचीतरङ्गन्यायेन स्वसंनिहितं शब्दान्तरमारभते स च शब्दः शब्दान्तरमिति क्रमेण श्रोत्रदेशे जातः शब्दः श्रोत्रेण गृह्यतइति । ३६ । ५१ ।

तदेकदेशिनस्तु कदम्बमुकुलन्यायमिहावतारयन्ति । यथा हि कदम्बमुकुलात्कालविशेषनिमित्तेन सर्वासु दिक्षु युगपद्बहूनि केसराण्युत्पद्यन्ते तथा भेर्यादिदण्डसंयोगेन वंशादिदलद्वयविभागेन वा निमित्तेन भेर्यादिदेशावच्छिन्नआकाशे दशसु दिक्षु दश शब्दा जायन्ते एतावन्मात्र एष दृष्टान्तः । अग्रे तु पूर्वोक्तप्रकारेण स्वसंनिहितानन्यशब्दानारभन्तइत्यादि ज्ञेयम् । ३७ । ५२ ।

अन्योन्यनाश्यनाशकभावविवक्षायां सुन्दोपसुन्दन्यायः । यथा हि सुन्दोपसुन्दसंज्ञौ सहोदरावसुरौ तिलोत्तमार्थं परस्परं वध्यघातकभावेनोभावपि नष्टाविति भा-

रते प्रसिद्धम् । तथा वीचीतरङ्गन्यायेनोत्पन्नानां कार्यशब्द-नाश्यानामन्त्योपान्त्यशब्दौ परस्परेण नाश्यावन्त्यउपा-न्त्येनोपान्त्यश्चान्त्येनेति केचित्तार्किकाः । तदयुक्तमित्य-परे उपान्त्येन द्विक्षणावस्थायिनान्त्यस्य द्वितीयक्षणवृत्ति-ध्वंसप्रतियोगिना तृतीयक्षणउत्पद्यमानान्त्यध्वंसजनना-योगात् तस्मादुपान्त्यनाश इति । किं तर्ह्येतन्न्यायोदाहर-णमिति चेत्सत्प्रतिपक्षावित्यवेहि तौ हि परस्परानुमि-तिप्रतिबन्धकत्वेनानुमितिकरणत्वरूपानुमानत्वनिरासकौ भवतः । इदमेव तयोरितरेतरनाशकत्वं नामेति । ३८ । ५३ ।

अयं तुल्यबलयोर्विरोधे प्रसरति प्रबलनिर्बलविरोधे सबलेन निर्बलबाधविवक्षायां तु मात्स्यन्यायावतारः । अयं प्रायः इतिहासपुराणादिषु दृश्यते । यथा हि वासिष्ठे प्रह्लादाख्याने तत्समाधिं प्रस्तुत्योक्तम् । एतावता ऽथ कालेन तद्रसातलमण्डलम् । बभूवाराजकं तीक्ष्णं मात्स्य-न्यायकदर्थितमिति । यथा प्रबला मत्स्या निर्बलांस्तान्नाश-यन्ति तथा ऽराजके ऽमुकदेशे प्रबला जना निर्बलान्नाशयन्ति स्मेति न्यायार्थः । प्राग्दर्शित आगमेन प्रत्यक्षादिबाधो ऽप्यस्योदाहरणं बोध्यम् । प्रबलश्रुत्यादिप्रमाणैर्निर्बललि-ङ्गादिप्रमाणबाधे ऽप्ययं बोध्यः । तथा हि विधिविशेषस्य सहकारीणि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थान-समाख्यारूपाणि । विध्यन्तरस्य च श्रुत्यर्थपाठस्थानमुख्य-प्रवृत्त्याख्यानि । तेषु पूर्वपूर्वस्य प्रबलत्वेनानेन न्यायेनोत्त-रोत्तरबाधकत्वमग्रे वक्ष्यामस्तावत्तदुपोद्घातत्वेन विधि-भेदाः संक्षेपतो निरूप्यन्ते । अप्राप्तं फलवन्तं चार्थं यः स्वसामर्थ्येन प्रकाशयति स विधिरुत्पत्त्यादिभिर्धर्मैर्युक्तः सन्नुत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारवि-धिश्चेति चतुर्विधो भवति । तत्र कर्मस्वरूपमात्रबोधको

विधिः प्रथमः। यथा ऽग्निहोत्रं जुहोतीति। अङ्गसम्बन्धबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीति। स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति। दध्यादीनामङ्गत्वं नाम परोद्देशप्रवृत्तकृतिव्याप्यत्वं पारार्थ्यं तच्चानेन विधिना ज्ञाप्यते। प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन्विलम्बे मानाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते। न च विलम्बवदविलम्बे ऽपि मानाभावः। विलम्बे ऽङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तेः। न हि विलम्बेन कृतयोः पदार्थयोः सह कृतमिति साहित्यं व्यवहरन्ति। स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति। अन्यथा किमेतदनन्तरमेतत्कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वेति। फलस्वाम्यबोधको विधिरधिकारविधिः। फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम्। स च यजेत स्वर्गकाम इत्येवंरूपः। अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं बोध्यते। तच्च स्वाम्यं तस्यैव यो ऽधिकारिविशेषणविशिष्टः। अधिकारिविशेषणं च तदेव यत्पुरुषविशेषणत्वेन श्रुतम्। अत एव राजा राजसूयेन स्वाराज्यकामो यजेत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधता ऽपि न स्वाराजकाममात्रस्य तत्फलभोक्तृत्वं बोध्यते किं तु राज्ञः सतस्तत्कामस्य। किं चित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भवति। यथा ऽध्ययनविधिसिद्धा विद्या अग्निसाध्येषु च कर्मस्वाधान-

सिद्धाग्निमत्ता। एवं सामर्थ्यस्याप्यधिकारिविशेषणत्वम्। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात्। असमर्थं प्रति विध्यप्रवृत्तेश्च। एवमर्थित्वादेरपि बोध्यमिति दिक्। तत्सिद्धं फलस्वाम्यबोधको ऽधिकारविधिरिति। तदेवं निरूपितश्चतुर्विधो विधिः। उत्तरकाण्डे ऽप्युपलभ्यते सः। तथा हि। तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्येत्यादिरुत्पत्तिविधिः। मन्तव्य इत्यादिर्विनियोगविधिः। तद्विजिज्ञासस्वेत्यादिना तु सन्प्रत्ययवाच्याया इच्छायाः प्रकृत्यर्थभूतस्य ज्ञानस्य चानुष्ठातुमशक्यतया सन्प्रत्ययेन विचारं लक्षयित्वा प्रकृत्या च फलीभूतज्ञानं लक्षयित्वा ऽद्वितीयब्रह्मज्ञानाय तत्कर्त्तव्यता विधीयते ब्रह्मसाक्षात्कारकामो वेदान्तविचारं कुर्यादिति। अतो ऽयमधिकारविधिः साधनचतुष्टयसम्पन्नो ऽधिकारी जिज्ञासुः साङ्गं वेदान्तश्रवणं कुर्यादिति प्रयोगविधिः कल्प्य इति। चतुर्विधो ऽप्ययं विधिः पुनः प्रकारान्तरेण त्रिविधः। स च विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्। उदक्तवं चापूर्वत्वात् विधिस्तु धारणे अपूर्वत्वात् नियमार्थो पुनः श्रुतिरुच्यते ऽपि तु संख्येत्येवमादिषु भगवतो जैमिनेः सूत्रेषु व्यवहृतः। भट्टपादैश्चान्योन्यासंकीर्णतया सलक्षणो विस्पष्टमुपपादितः। विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयतइति। अस्यार्थः यस्य यदर्थत्वं मानान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सो ऽपूर्वविधिः। यथा यजेत स्वर्गकामः व्रीहीन्प्रोक्षतीत्यादिः। नात्र यागस्य स्वर्गार्थतायाः व्रीहीणां प्रोक्षणस्य च संस्कारकर्मणो विधिं विना कथमपि प्राप्तिरस्ति अतो ऽयमपूर्व एव विधिः। पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलो विधिर्नियमविधिः। यथा व्रीहीन्नवहन्तीति। अत्र

विध्यभावे ऽपि पुरोडाशप्रकृतिद्रव्याणां तण्डुलनिष्पत्त्या-क्षेपादेवावहननप्राप्तिरस्ति। किं तु तद्वदेव लोकावगतकारणत्वाविशेषान्नखविदलनादिरपि पक्षे प्राप्नुयादित्यवहननाप्राप्तांशसंभवात्तदंशपरिपूरणफलः। उभयत्रैकस्योभयोर्वैकत्र युगपत्प्राप्तावन्यतरनिवृत्तिफलो विधिः परिसंख्याविधिः। यथा चयने ऽश्वगर्दभरशनयोर्ग्रहणे युगपदनुष्ठेये सामर्थ्याविशेषात्प्राप्तस्येमामगृभ्णन् रशनामिति मन्त्रस्याश्वाभिधानीमादत्त इति गर्दभरशनाग्रहणव्यावृत्तिमात्रफलको विधिः। एवं पञ्च पञ्चनखा भक्ष्या इत्यपि परिसंख्याविधिः। इदं हि न भक्षणपरं तस्य रागतः प्राप्तत्वात् किं त्वपञ्चपञ्चनखभक्षणनिवृत्तिपरमिति। न च नियमपरिसंख्ययोः फलतो न विशेषः। यतो नियमस्य विधेयावघातनिष्ठत्वात्सन्निहितमप्राप्तांशपूरणमेव फलं नखावदलनादिनिवृत्तिस्त्वार्थिकीति।

अथ श्रोतव्य इति को विधिरिति विचार्यते। तत्र केचिच्छ्रवणं श्रोतव्यार्थसाक्षात्कारहेतुरिति सामान्यनियमस्य धर्मश्रवणे व्यभिचारादसिद्धेः ब्रह्मश्रवणं ब्रह्मसाक्षात्कारहेतुरिति विशेषनियमस्यापीदानीं केषु चिद्वामदेवे चान्वयव्यतिरेकव्यभिचारादसिद्धेः अलौकिके ब्रह्मसाक्षात्कारे लौकिकोपायाप्राप्तेश्च यद्युपायान्तरेण सह विकल्पेन समुच्चयेन वा श्रवणं मानान्तरेण प्राप्तं स्यात्तदा नियमः परिसंख्या वेति संभावना स्यान्न तु तथा ऽस्तीत्यपूर्वविधिरेवायमिति मन्यन्ते।

अपरे तु विचारमात्रे विचार्यनिर्णयहेतुत्वस्य लोकसिद्धत्वादपरोक्षार्थविषयमानावच्छेदेनापरोक्षहेतुत्वस्य ग्रन्थकृद्भिः शाब्दापरोक्षवादे व्यवस्थापनाच्च यत्साक्षादपरोक्षाद् ब्रह्मेति श्रुतिर्नित्यापरोक्षब्रह्मप्रमाणविचारितवे-

दान्तरूपश्रवणस्यापि ब्रह्मसाक्षात्कारहेतुत्वमर्थप्राप्तमेव परं त्वात्मतत्त्वजिज्ञासोरेतद्विध्यभावे मनोगोचरे स्वस्मिन् श्रुतिबोधितसूक्ष्मतमविशेषावधारणाय मनस एव सप्रणिधानव्यापारे ऽद्वैतशास्त्रश्रवणे वा मेधाविनो गुरुनिरपेक्ष-वेदान्तविचारे मन्दव्युत्पन्नस्य भाषाप्रबन्धश्रवणे प्रवृत्तिप्रसक्तिरस्तीति साधनत्वभ्रान्तिप्राप्तैर्मनःप्रणिधानादिभिर्गुर्वधीनाद्वितीयात्मपरवेदान्तश्रवणस्य पाक्षिकत्वप्रसक्तौ नियमविधिरयमित्याहुः ।

चिकित्साज्ञानार्थं चरकादिग्रन्थश्रवणे प्रवृत्तस्येव ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्यापि मध्ये मध्ये प्रवृत्त्यन्तरप्रसक्तौ तन्निवृत्तिफलकः परिसंख्याविधिरयमित्यन्ये ।

आगमाचार्यवाक्यजं ज्ञानमेव श्रवणं तस्मिंश्च विषयप्रमाणतन्त्रे ऽयोग्ये शिलादौ क्षुरधारेव श्रूयमाणो विधिः कुण्ठीभवतीति नात्र विधित्रयस्याप्यवकाश इतीतरे ।

परे तु विचारे ऽपि विचार्यनिर्णयहेतुत्वस्य लौकिकमानसिद्धत्वाद्गुरूपसदनविधेर्दृष्टार्थवत्त्वाय गुरुपूर्वकत्वनियमसिद्धेरीशानुग्रहलभ्याद्वैतशास्त्रश्रद्धाहीनस्य श्रवणविधावपि द्वैतात्मश्रवणपरत्वधीसंभवादिति न कस्यापि विधेरवकाश इत्याहुः । अलं प्रपञ्चेन । तदेवं संक्षेपतो विधिभेदा निरूपिताः । तत्र विनियोगविधेः सहकारीणि पूर्वोक्तानि श्रुत्यादिषट्प्रमाणानि निरूप्यन्ते । तत्र निरपेक्षो रवः श्रुतिः सा च त्रिधा विधात्री अभिधात्री विनियोक्त्री चेति । तत्र विधात्री लिङाद्यात्मिका अभिधात्री व्रीह्यादिश्रुतिः यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री । सा च त्रिविधा विभक्तिरूपा एकाभि-

धानरूपा एकपदरूपा चेति । तत्र व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम् । पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकङ्गत्वं यजेतेत्याख्याताभिहितसंख्याया भावनाङ्गत्वं समानाभिधानश्रुतेरेव । पदश्रुत्या च यागाङ्गत्वं परिगणनं च प्रायोऽभिप्रायं तेन शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वा ऽऽत्मन्येवात्मानं पश्येदित्यत्र क्त्वाश्रुत्या शमादेरात्मदर्शनाङ्गत्वमिति वृद्धोक्तिः संगच्छते । एवं रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वेत्यादावपि बोध्यम् । सामर्थ्यं लिङ्गं सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयत इत्युक्तेः तेनाङ्गत्वं यथा बर्हिर्देवसदनं दामीत्यस्य मन्त्रस्य लवनाङ्गत्वम् । स हि लवनं प्रकाशयितुं समर्थः । तच्च लिङ्गं द्विविधं सामान्यसंबन्धबोधकमानान्तरापेक्षं तदनपेक्षं च तत्र यदन्तरेण यन्न संभवत्येव तस्य तदङ्गत्वं तदनपेक्षम् । यथा ऽर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम् । लवनं हि मन्त्रं विना ऽप्युपायान्तरेण स्मृत्वा कर्त्तुं शक्यते अतो न मन्त्रो लवनस्वरूपार्थः संभवति किं त्वपूर्वसाधनभूतलवनप्रकाशनार्थः । तत्त्वं च सामर्थ्यमात्रादवगम्यते लवनप्रकाशनमात्रे सामर्थ्यात् । अतो ऽवश्यं प्रकरणादि सामान्यसंबन्धबोधकमुपेयं दर्शपूर्णमासप्रकरणे मन्त्रस्य पाठादेवमवगम्यते अनेन मन्त्रेण दर्शपूर्णमासापूर्वसंबन्धि किंचित्प्रकाश्यतइति । अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात् । किं तदपूर्वसंबन्धि प्रकाश्यमित्याकाङ्क्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते । समभिव्याहारो वाक्यम् । समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणं यथा यस्य पर्णमयी जुहूर्भव-

तीति । अत्र न द्वितीयादिविभक्तिः श्रूयते किं तु पर्णता-जुह्वोः समभिव्याहारमात्रम् । तस्मादेव च पर्णताया जुह्वङ्गत्वं प्रतीयते न चानर्थक्यम् जुहूशब्देनापूर्वलक्षणात् । तदयं वाक्यार्थः । पर्णतयाऽवत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेदिति । एवं च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यतइति न पर्णताया वैयर्थ्यम् । उभयाकाङ्क्षा प्रकरणम् । यथा प्रयाजादिषु समिधो यजतीत्यत्र हीष्टविशेषस्यानिर्देशात्समिद्यागेन भावयेत् किमित्यस्त्युपकार्याकाङ्क्षा दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्कथमित्यप्युपकारार्थाकाङ्क्षा अत उभयाकाङ्क्षायां प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सिध्यति । महाप्रकरणावान्तरप्रकरणभेदादिदं द्विविधम् । तत्र फलभावनायाः प्रकरणं महाप्रकरणं तच्च प्रयाजादेर्ग्राहकं तत्पुनः प्रकृतावेव । यत्र समग्राङ्गोपदेशः सा प्रकृतिः । यथा दर्शपूर्णमासादि तत्रैवोभयाकाङ्क्षारूपं प्रकरणं संभवति आकाङ्क्षाऽनुपरमात् विकृतौ तु न प्रकरणम् । यत्र समग्राङ्गोपदेशो नास्ति सा विकृतिः । फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम् । तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम् । उभयविधं प्रकरणं क्रियाया एव विनियोजकं न द्रव्यगुणयोरिति स्थितम् । देशसामान्यं स्थानम् । तच्च द्विविधं पाठसादेश्यमनुष्ठानसादेश्यं चेति । पाठसादेश्यमपि द्विविधम् । यथासंख्यपाठः सन्निधिपाठश्चेति तत्रैन्द्राग्नमेकादशकपालं निर्वपेद्वैश्वानरं द्वादशकपालं निर्वपेदित्येवं क्रमविहितास्विष्टिषु इन्द्राग्नी रोचना दिव इत्यादीनां याज्याऽनुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स

यथासंख्यपाठात् । प्रथमपठितस्य मन्त्रस्य हि कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् । यानि तु वैकृतान्यङ्गानि प्राकृताङ्गानुवादेन विहितानि प्राकृताङ्गाप्राकृताङ्गानुवादेन विहिताङ्गविध्योस्तादृशाङ्गप्रधानविध्योर्वा मध्ये न पठितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात् । पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽहनि अग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितपश्वपूर्वमेव भाव्यत्वेन संबध्यते । अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषामिति संक्षेपः । समाख्या यौगिकः शब्दः । सा द्विविधा वैदिकी लौकिकी च । तत्र होतुश्चमसभक्षणाङ्गत्वं होतृचमस इति वैदिक्या समाख्यया अध्वर्योस्तत्पदार्थाङ्गत्वं लौकिक्या ऽऽध्वर्यवमिति समाख्ययेति । तदेवं निरूपितानां श्रुत्यादीनामुत्तरोत्तरं प्रति पूर्वपूर्वस्य प्राबल्यम् । तदुक्तम् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात् । समवाये समानविषयत्वेन द्वयोर्विरोधे परस्य दौर्बल्यं कुतः अर्थविप्रकर्षात् परस्य पूर्वव्यवधानेन प्रवृत्तेरित्यर्थः । अयं भावः एकत्र विनियुक्तस्य निराकाङ्क्षत्वादन्यत्र विनियोगो विरुद्ध एव परं तु विनियोजकप्रमाणयोः समबलत्वे ऽन्यतरविनियोगत्यागायोगादगत्या ऽऽकाङ्क्षोत्पादनेन विनियोगः स्वीक्रियते । यथा खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्यादिति वाक्याभ्यां क्रतौ विनियुक्तस्य खादिरत्वस्य फले विनियोगः । यत्र तु प्रमाणयोरतुल्यत्वं तत्र न स्वीक्रियते प्रबलेन दुर्बलविनियोगबाधात् । यथा कदाचन स्तरीरसि नेन्द्र सश्चसीत्यस्या ऋच ऐन्द्रया गार्हपत्य-

मुपतिष्ठतइति तृतीयाश्रुत्या ऽन्यनिरपेक्षया गार्हपत्योपस्थानशेषत्वबोधिकयेन्द्रप्रकाशनसामर्थ्यरूपलिङ्गप्राप्तमिन्द्रशेषत्वं बाध्यते । लिङ्गं हि न साक्षाच्छेषत्वं बोधयति । किं त्विन्द्रप्रकाशनमात्रं करोति । तेन च लिङ्गेनानेन मन्त्रेणेन्द्र उपस्थापयितव्य इति श्रुतिः कल्प्या तया शेषत्वबोध इति श्रुतिव्यवधानेन शेषत्वबोधकं लिङ्गं झटिति स्वार्थबोधकश्रुत्या बाध्यम् । तथा लिङ्गेन वाक्यं बाध्यं यथा स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति मन्त्रभागयोः प्रत्येकं सदनकरणे पुरोडाशासादने च तत्प्रकाशनसामर्थ्यलिङ्गेन श्रुतिद्वारा विनियोगे सति प्रतीतमेकवाक्यत्वं बाध्यते । तस्य कृत्स्ने ऽपि मन्त्रे सदनकरणप्रकाशनसामर्थ्यं पुरोडाशासादनप्रकाशनसामर्थ्यं च लिङ्गं कल्पयित्वा श्रुतिकल्पनयोभयत्र कृत्स्नविनियोगबोधने द्वाभ्यां लिङ्गश्रुतिभ्यां व्यवधानेन श्रुत्येकव्यवहितक्लृप्तलिङ्गाद् दुर्बलत्वात् । तथा वाक्येन प्रकरणं बाध्यम् यथा सान्हप्रकरणाम्नातद्वादशोपसदां द्वादशाहीनस्येति वाक्येनाहीनाङ्गत्वबोधकेन प्रकरणप्राप्तसान्हाङ्गत्वबाधादुत्कर्षः प्रधानस्याङ्गाकाङ्क्षारूपं प्रकरणं तस्याङ्गप्रधानवाक्यैकवाक्यतासामर्थ्यश्रुतिभिः कल्प्यमानाभिः स्वार्थविनियोगप्रमितौ व्यवधानेनाङ्गसामर्थ्यश्रुत्योर्द्वयोः कल्पकवाक्यात दुर्बलत्वात् । तथा प्रकरणेन सन्निधिर्बाध्यः । यथा राजसूयप्रकरणेन तदन्तर्गताभिषेचनीयाख्यसोमयागविशेषसन्निधिपाठप्राप्तं शुनःशेफीयाख्यानादेरभिषेचनीयशेषत्वं बाधित्वा कृत्स्नराजसूयशेषत्वमापादितम् । सन्निधेः प्रकरणादिकल्पकत्वेन क्लृप्तप्रकरणात् दुर्बलत्वात् । तथा संनिधिना समाख्या बाध्यते ।

तथा हि पौरोडाशिकसमाख्याके काण्डे आग्नेयपुरोडाशादिकर्मणां क्रमेण मन्त्रा आम्नातास्तत्र दधिपयोरूपसान्नाय्यसन्निधौ शुन्धध्वं दैव्याय कर्मणइति मन्त्र आम्नातस्तत्र समाख्याबलेनास्य मन्त्रस्य पुरोडाशपात्रं शुन्धनशेषत्वं प्राप्तं सन्निधिना बाधित्वा सान्नाय्यपात्रशुन्धनशेषत्वमापाद्यते । पुरोडाशसंबन्धिकाण्डं पौरोडाशिकमिति समाख्यायाः काण्डान्तर्गतमन्त्रस्य पुरोडाशसंबन्धसामान्यबोधकत्वे ऽपि शेषशेषिभावरूपविनियोगबोधकत्वे सन्निध्याद्यपेक्षतया दुर्बलत्वात् । एवं च विरोधे सति श्रुतिर्बाधिकैव समाख्या बाध्यैव । मध्यानां तु पूर्वबाध्यत्वं परबाधकत्वं चेति श्रुतिलिङ्गसूत्रार्थः । तदेवं निरूपितानि विनियोगविधिसहकारीणि प्रमाणानि निरूप्यन्ते तद्बाध्यबाधकभावश्चोपपाद्यते । तत्र क्रमपरं वचनं श्रुतिः । तच्च द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति । तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम् । वेदिकरणादेर्वचनान्तरेण विहितत्वात् । वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् । एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् । सेयं श्रुतिरितरप्रमाणापेक्षाया बलवती । तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अत एवाश्विनस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तौ अश्विनो दशमो गृह्यतइति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् १ । यत्र प्रयोजनवशेन निर्णयः स आर्थक्रमः । यथा ऽग्निहोत्रहोमयवागूपाकयोः । अत्र हि यवाग्वा होमार्थत्वात्तत्पाकः प्रयोजनवशात्पूर्वमनुष्ठीयते । स चायं पाठक्रमाद्बलवान् । यथापाठे ह्यनुष्ठाने क्लृप्तप्रयोजनबाधः अदृष्टार्थत्वं च स्यात् । न हि होमानन्तरं क्रियमाणस्य किं चिद्दृष्टप्रयोजनमस्ति २ । पदार्थबोधकवाक्यानां

यः क्रमः स पाठक्रमः ततः पदार्थानां क्रम आश्रीयते । स च पाठो द्विविधः । मन्त्रपाठो ब्राह्मणपाठश्च । तत्राग्नेयाग्नीषोमीययागयोस्तत्तद्याज्यानुवाक्याक्रमाद्यः क्रम आश्रीयते स मन्त्रपाठात् । सोऽयं ब्राह्मणपाठाद्बलवान् । अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदमेवं कर्त्तव्यमित्येवमवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते मन्त्राः पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारकाः ३ । प्रकृतौ नानादेशानां पदार्थानां विकृतौ वचनादेकस्मिन्देशे ऽनुष्ठाने कर्त्तव्ये यस्य देशे ऽनुष्ठीयन्ते तस्य प्रागनुष्ठानमितरयोस्तु पश्चादिति क्रमः स्थानक्रमः । स्थानं नामोपस्थितिः । यस्य हि देशे ऽनुष्ठीयन्ते तत्पूर्वतने पदार्थे कृते स एव प्रागुपस्थितो भवतीति युक्तं तस्य प्रागनुष्ठानम् ४ । प्रधानक्रमेणाङ्गक्रमो मुख्यक्रमः । येन क्रमेण प्रधानानि क्रियन्ते तेनैव चेत्क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः प्रधानैस्तुल्यं व्यवधानं भवति व्युत्क्रमेण त्वनुष्ठाने केषां चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानम् अन्येषामत्यन्तं व्यवधानं च स्यात् तच्चायुक्तं प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमो ऽप्यङ्गक्रमे हेतुः । स चायं मुख्यक्रमः पाठक्रमाद् दुर्बलः । मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिः । पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान् । प्रवृत्तिक्रमात्तु बलवानयम् । प्रवृत्तिक्रमे ह्याश्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति मुख्यक्रमे त्वाश्रीयमाणे सन्निकर्षः ५ । सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामावृत्त्या ऽनुष्ठाने कर्त्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठित-

पदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः ६ । तदेवमेतेषु बाध्यबाधकभावस्य संप्रतिपादनान्मात्स्यन्यायोदाहरणत्वसामञ्जस्यम् । यथा च तिमिंगिलगिलो ऽप्यस्ति तद्गिलो ऽप्यस्ति राघव इत्युक्तेस्तिमिंगिलबाधकस्य राघवस्य सुतरां तद्बाध्यतिमिंगिलादिबाधकत्वं तथा लिङ्गादिबाधकस्य श्रुत्यादेः सुतरां तद्बाध्यवाक्यादिबाधकत्वमिति सर्वमनवद्यम् । ननु श्रुत्यादिभिर्न हि बाध्यमित्येवं लिङ्गादि बाध्यते किं तु सति विरोधे मत्स्यैस्तु दुर्बलमात्रं बाध्यते तथा च कथमुदाहरणसंगतिरिति चेन्न तद्बाध्यबाधकभावस्यापि विरोधपुरःसरत्वात् । न हि तैः पुत्रपौत्रादयो ऽपि बाध्यन्ते किं तु प्रत्युत लाल्यन्तइति वैष्णवे सौभरेराख्याने प्रसिद्धमिति सर्वं सुस्थमिति मात्स्यन्यायः ३९ । ५४ ।

यत्र निर्बलेनापि प्रबलसहायेन प्रबलो बाध्यते तत्र अत्यन्तबलवन्तो ऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैरिति न्यायो ऽवतरति । स्पष्टार्थो ऽयम् । उदाहरणं तुश्रुत्यपेक्षाया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यम् अतः श्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते आचमनमेव कार्यमिति दिक् । ४० । ५६ ।

यत्रान्यत्रातिप्रसक्तादवयवार्थालोचनसव्यपेक्षाच्च योगात्समुदायशक्तेः प्राबल्यं विवक्ष्यते तत्र रूढिर्योगमपहरतीति न्यायः । यथा गौरित्यादावन्यत्रातिप्रसक्तप्रकृतिप्रत्ययार्थालोचनसव्यपेक्षगमनकर्तृत्वादिरूपयोगार्थत्यागेन रूढ्या सास्नादिमती व्यक्तिर्गृह्यते तथा वर्षासु रथकारो ऽग्नीनादधीतेत्यत्र रथकारशब्देन व्रात्यवैश्योत्पन्नो

वर्णविशेष उच्यते न तु रथं करोतीति व्युत्पत्त्या द्विजातय इति संक्षेपः । ४१ । ५७ ।

श्रुतयौगिकार्थलाभे सत्यनन्वितरूढार्थस्त्याज्य इति न्यायो विशेषतया ऽस्य बाधकः । दृश्यते हि मण्डपं भोजयेत्यत्र मण्डं पिबतीति यौगिकार्थलाभेनानन्वितगृहरूपरूढार्थत्यागः । ४२ । ५८ ।

एवं प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायः सामान्यविषयः । औपगवो वापक इत्यादौ हि प्रत्ययार्थस्यापत्यकर्त्रादिरूपस्य प्राधान्यं यातीत्यादिक्रियान्वयात् । एवमन्यत्रापि बोध्यम् । ४३ । ५९ ।

भावप्रधानमाख्यातमिति न्यायः । ४४ । ६० ।

इच्छेष्यमाणसमभिव्याहारइष्यमाणस्यैव प्राधान्यं न त्विच्छाया इति न्यायश्च तद्बाधकः । अश्वेन जिगमिषति असिना जिघांसतीत्यादौ यथेष्यमाणस्य गमनहननादेः प्राधान्यात्तत्रैवाश्वास्यादेः करणत्वेनान्वयस्तथा तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेनेत्यत्रेष्यमाणस्य वेदनस्य प्राधान्यात्तत्रैव वेदानुवचनादेर्विनियोग इति दिक् । ४५ । ६१ ।

एतेन कामनागोचरत्वेन शाब्दे बोधएव शाब्दसाधनतान्वय इयि न्यायो ऽपि व्याख्यातः । ४६ । ६२ ।

नन्विच्छागोचरत्वस्य मोक्षसाधारणत्वात्तत्रैव यज्ञादिविनियोगः कुतो न स्यादिति शङ्कानिरासाय शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यतइति न्यायः । ४७ । ६३ ।

न हि शाब्दमशाब्देनान्वेतीति न्यायश्च प्रवर्तते स्पष्टावुभौ । ४८ । ६४ ।

यत्रैकपदशक्यार्थस्य सारासारभूतमंशद्वयमस्ति त्याज्यासाराविनाभूताभीष्टसारजिघृक्षया च तदविनाभूतमसारमप्यादौ गृह्यते त्यज्यते च गृहीते सारे तत्र स त्स्यकण्टकन्यायः । यथा मत्स्यमांसार्थी तत्संबद्धान्कण्टकादीनपि तावद्गृह्णाति त्यजति च तस्मिन् गृहीते । तथा तत्त्वंपदलक्ष्यार्थजिघृक्षया तदुपाधी अपि गृह्येते त्यज्येते च भागत्यागलक्षणया सति लक्ष्यार्थग्रहे । उपपादितो ऽयमर्थः प्राक् । ४९ । ६५ ।

धान्यपलालन्यायो ऽपीदृशः । ५० । ६६ ।

अर्द्धं त्यजति पण्डित इति न्यायो ऽपि भागत्यागलक्षणास्थलएव प्रसरति । ५१ । ६७ ।

तत्त्वंपदलक्ष्यार्थाभेदे ऽन्यतरपदवैयर्थ्यमिति शङ्कोच्छेदाय पदमप्यधिकाभावात्स्मारकान्न विशिष्यतइति न्यायो ऽवतरति । तथा च लक्ष्यार्थबोधे प्रमात्वसंपादकतया पदान्तरसाफल्यमिति बोध्यम् । ५२ । ६८ ।

कुत उपाधेरेव त्यागनियमः । नेतिनेतीत्यादिनिषेधान्यथाऽनुपपत्त्या सर्वतो बलवती ह्यन्यथाऽनुपपत्तिरिति न्यायेन तस्मिन्मिथ्यात्वावधारणात् । सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति न्यायाच्च । ५३ । ६९ ।

सर्वत इति प्रासङ्गिकः । १ । ७० ।

आत्मतादात्म्यापन्नस्यानात्मनो नेतीत्यादिनिषेधवाक्यैर्बाधे कथं तत्तादात्म्यापन्नस्यात्मनो न बाधः स्यादिति शङ्कापाकरणाय नागोष्ट्रन्यायावतारः । यथा कश्चिदुष्ट्रपतिरजगरेण वेष्टितमुष्ट्रं रक्षन्बाणैरजगरं जघानेति लौकिकी गाथा तथा निषेधवाक्यानि बाधावधित्वेनात्मानं रक्षन्त्यनात्मानं बाधन्तइति । ५४ । ७१ ।

स्वमते परेणोद्भाव्यमानानां दूषणानां तन्मते पातने उष्ट्रलगुडन्यायावतारः । यथोष्ट्रेणोह्यमानेनैव लगुडेन तत्प्रहारः क्रियते तथा तार्किकोत्थापितदूषणैस्तन्मतमेव वेदान्तिभिर्निराक्रियते । तथा हि । अद्वैतवादे यद्भोगसांकर्यादिरूपदूषणं तैरुच्यते तदौपनिषदैर्विभ्वनेकात्मवादिनां तेषामेव मते पात्यते तद्यथा यदैकेनात्मना मनः संयुज्यते तदात्मान्तरैरपि तत्संयोगस्यावश्यकत्वेन तदविशेषात्सुखादेरप्यविशेषः स्यात् । अदृष्टाभिसंध्यादेरपि सर्वसाधारणमनःसंयोगासमवायिकारणकत्वेन व्यवस्थापकत्वाभावात्सांकर्यं दुष्परिहरमिति संक्षेपः । ५५ । ७२ ।

एकतान्त्रिकमतनिरासाय प्रयुक्तया युक्तया तत्सदृशमतान्तरनिराकरणं यदा विवक्ष्यते तदा पुष्टलगुडन्यायप्रवृत्तिः यथा बहूनां मध्यएकस्य शुनः प्रहारार्थं प्रक्षिप्तः पुष्टलगुडस्तं प्रहृत्यान्यानपि प्रहरति । तथा ब्रह्मकारणवादिभिः सांख्याभिमतप्रधानकारणवादनिरासाय प्रयुक्ता ईक्षतेर्नाशब्दम् रचनाऽनुपपत्तेश्च नानुमानमित्यादिसमन्वयाविरोधाध्यायगतसूत्रस्था युक्तयस्तं निरस्य योगाभिमतप्रधानकारणवादमपि साम्यान्निराकुर्वन्तीति दिक् । ५६ । ७३ ।

जामात्रर्थं श्रप्तस्य सूपादेरतिथ्युपकारकत्वमिति न्यायः । ५७ । ७४ ।

गृहार्थमारोपितस्य दीपस्य रथ्योपकारकत्वमिति न्यायश्चेह प्रवर्त्तते । ५८ । ७५ ।

एवं तुलोन्नमनन्यायोऽपि बोध्यः । यथा हि तुलायाः पश्चिमभागस्याधस्तत्कनिष्ठिकाद्याघातेनोन्नमने कृते सति पूर्वभागस्य नमनं यत्नान्तरमन्तरेणैव भवति तथैक-

स्मिन्परमार्थद्वैतवादिनि जिते ऽन्ये विनैवोद्यमं जिता भवन्तीति । ५६ । ७६ ।

एकस्मिन्प्रधाने प्रतिवादिनि जिते ऽन्ये सुखेन जेतुं शक्यन्तइतीदृग्विषये प्रधानमल्लनिबर्हणन्यायः मल्ला बाहु-युद्धविशारदास्तेषु प्रधानस्य निबर्हणं भूमौ प्रतिष्ठापनं तत्पृष्ठभागस्य तया संयोजनमिति यावत् जयकामेन प्रथमं क्रियते तस्मिन्निगृहीते हि तदपेक्षया दुर्बलानामन्येषां जयः सुकर इति न्यायार्थः । ६० । ७७ ।

याभिर्युक्तिभरतिप्रबलशुष्कतर्ककर्कशत्वेन प्रसिद्धो ऽपि द्वैतसत्यत्ववादी वैशेषिकादिर्जय्यस्ताभिरितरे क्षुद्राश्चार्वाकादयस्तु दूरतो निरस्ता भवतीन्ति विवक्षायामाषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठेति न्यायप्रवृत्तिः । चलतीति सप्तम्यन्तं पदं देहलीदीपन्याये-नोभयत्र संबध्यते । चक्रीवान् गर्दभः । चक्रीवन्तस्तु बालेया रासभा गर्दभाः खरा इत्यभिधानात् । स्पष्टमन्यत् । ६१ । ७८ ।

देहलीति प्रासङ्गिको ऽत्र । यथा देहल्यां धृतो दीपो बाह्यमाभ्यन्तरं च देशं प्रकाशयति तथा मध्ये निक्षिप्तं पद-मुभाभ्यां साकाङ्क्षपदाभ्यां संबध्यतइत्यर्थः । १ । ७९ ।

काकाक्षिन्यायो ऽपीह बोध्यः । काकस्यैकमेव चक्षु-रिन्द्रियं गोलकद्वये ऽपि क्रमेण यथा संबध्यते तथा प्रकृते ऽपीत्यर्थः । २ । ८० ।

आषाढवातन्यायविषये कैमुतिकन्यायो ऽपि वर्त्तते। इयांस्तु विशेषो यत्पूर्वो दृष्टान्तदार्ष्टान्तिकयोर्निन्दायां पर्यवस्यति अयं तु स्तुतिनिन्दोभयसाधारणः । तत्र नि-न्दायां पूर्वमेवोदाहरणं बोध्यम् । स्तुतौ तु मां हि पार्थ-

त्यादि भगवद्गीतायाः सार्द्धश्लोक उदाहरणम् । अपि चेत्सुदुराचार इत्यादावपिशब्देन द्योतितो ऽयं न्यायः सर्वैर्ग्रहैर्गृहीतान्वै सर्वपापसमन्वितान् । स मोचयति सुप्रीतः शरण्यः शरणागतानित्यादावर्थलभ्यः । यदि सदाशिवः सर्वपापयुतानपि शरणागतान्मोचयति तदा ऽल्पपापान्वितान्साधून्वा शरणागतान्मोचयतीति किमु वक्तव्यमिति । ६२ । ८१ ।

मां हि पार्थेत्यादिकैमुतिकन्यायोदाहरणेषु पुण्ययोनयो ब्राह्मणाः क्षत्रियाश्चेशव्यपाश्रयाः सन्तः सुतरां मोक्षं यान्तीत्याद्यर्थसिद्धं दण्डापूपिकान्यायेन दण्डाकर्षणेन तदवलम्बिनामपूपानामाकर्षणं यथा ऽर्थसिद्धं तद्वदित्यर्थ इति केचित् । अन्ये त्वपूपवन्तं दण्डमानयेति स्वाम्यनुशासनाद्गतो भृत्यो मूषकैः किंचिद्भक्षितं दण्डं दृष्ट्वा दण्डस्तु भक्षितो मूषकैरित्युवाचेति लौकिकी गाथा तथा च यथा तद्वाक्यादेवापूपभक्षणं सुखेन प्रतीयते तथा प्रकृतेपीत्याहुः । ६३ । ८२ ।

पुष्टलगुडन्यायादारभ्यैतत्पर्यन्तानां न्यायानां साम्ये ऽपि यत्किंचिद्विशेषमादायाणुरपि विशेषो ऽध्यवसायकर इति न्यायेन भेदसिद्धिर्भिन्नोदाहरणत्वसिद्धिश्च केषांचिदिति बोध्यम् । ६४ । ८३ ।

यत्रायासं विना साक्षात्सिध्यन्तमर्थमुपेक्ष्यायासेन परम्परया स एवार्थः साध्यते तत्र दण्डसर्पमारणन्यायावतरणम् । कश्चित्सर्पं दृष्ट्वा तन्मारणाय दण्डमिच्छंस्तमलभमानश्च कुठारं गृहीत्वा तच्छेदाय प्रवर्त्तते । तस्य यथा ऽऽयासो वृथा कुठारेणैव सर्पस्य शक्यवधत्वात् । तथा यया युक्त्या रज्जुसर्पादिसंसर्गस्यानिर्वचनीयत्वं प्रसाध्य

तद्दृष्टान्तेन सर्पाद्यनिर्वचनीयत्वं साध्यते तथैव सर्पाद्यनिर्वचनीयत्वस्य सुसाध्यत्वात्संसर्गानिर्वचनीयत्वसाधनायासो वृथेत्यादि । ६५ । ८४ ।

बकबन्धनन्यायो ऽपीह प्रवर्त्तते । बकं जिघृक्षुः कश्चित्सूर्यरश्मिसंतप्ते तच्छिरसि नवनीतं निधाय विलीनेन तेन तन्नेत्रयोः पूर्णयोरन्धीभूतं जिघृक्षति तस्य यथा नवनीतप्रक्षेपायासो वृथा तं विना ऽपि तदैव ग्रहीतुं शक्यत्वात्तथा प्रकृते ऽपीत्यर्थः । ६६ । ८५ ।

अन्त्ये रण्डाविवाहश्चेदादावेव कुतो न स इति न्यायः । ६७ । ८६ ।

ऋजुमार्गेण सिध्यतो ऽर्थस्य वक्रेण साधनायोग इति न्यायः । ६८ । ८७ ।

शिरोवेष्टनेन नासिकास्पर्शन्यायश्चापीदृशः । अत्र भुजयेत्यादिः । स्पष्टमन्यत् । अयमेव कैश्चिद् द्रविडप्राणायामन्यायो ऽभिधीयते । ६९ । ८८ ।

यत्र न्यायात्सर्वत्यागे ग्रहणे वा प्रसक्ते निर्युक्तिकमेकांशोपादानमंशान्तरत्यागश्च क्रियते तत्रार्द्धजरतीन्यायप्रयोगः । जरत्या वृद्धायाः स्त्रियाः पतिस्तदर्द्धं मुखमात्रं गृह्णाति अवयवान्तरं त्यजतीति यथा युक्तिशून्यं तथा यद्याप्तावचनत्वेनागमप्रामाण्यमुपगच्छन्ति तेषां बुद्धवचसामपि प्रामाण्यप्रसङ्गः । वेदस्यापि वा ऽप्रामाण्यापत्तिः यदि चेशवचनत्वसाम्ये ऽपि वेदस्य प्रामाण्यमप्रामाण्यं च बुद्धवचनस्याङ्गीक्रियते तदेदमपि युक्तिशून्यम् । ७० । ८९ ।

सदसंभवविवक्षायामर्द्धवैशसन्यायः । यथा कुक्कुटीमांसभोजनकामस्तत्संततिकामश्च कश्चिद्यवनस्तद्ग्रीवादिकं छित्त्वा भुङ्क्ते उदरं च संतानार्थं स्थापयति तद् यथा न संभवति तथा प्रकृते ऽपीत्यर्थः । ७१ । ९० ।

एकत्र विरुद्धानेकधर्मसमावेशासंभवविवक्षायां तु सुभगाभिक्षुकन्यायः । यथा सुभगत्वं भिक्षुकत्वं च पुंस्त्वं च तथाविधपदद्वयसामानाधिकरण्यात्प्रतीयमानमपि विरुद्धत्वादेकस्मिन्युगपन्न संभवति तथैकस्मिन्नीशरूपाप्तवचने प्रामाण्याप्रामाण्यलक्षणं विरुद्धं धर्मद्वयं न संभवतीति केचित् । अन्ये तु यथा सुभगाभिक्षुकौ प्रबलघातकभयात्कंचिच्छरणं प्रपन्नौ स च शरणागतत्यागदोषश्रवणात् सर्वप्रयत्नेनोभयो रक्षणे प्रबलारिकृतस्वघातभयेन त्यागे वा प्राप्ते ऽपि सुभगां रक्षति भिक्षुकं त्यजतीति यत्तत्र तस्येच्छैव नियामिका न तु किंचिद्विनिगमकमस्ति तथा प्रकृते ऽपीशवचनत्वादुभयोः प्रामाण्ये पौरुषेयत्वान्मूलप्रमाणसापेक्षतया धर्मादौ तदभावादप्रामाण्ये वा प्राप्ते ऽप्युक्तविभागे तार्किकेच्छैव नियामिकेत्यर्थमाहुः । ७२ । ६१ ।

एवं स्मृत्यादि दृष्ट्वा ऽऽगममूलकतया प्रामाण्यं न तु ऋषिवचनत्वादिना बृहस्पतिप्रणीतनास्तिकशास्त्राणामपि प्रामाण्यापत्तेरित्यादि स्वयमूह्यम् । एकत्र निर्णीतः शास्त्रार्थो ऽन्यत्रापि तथेति न्यायात् । ७३ । ६२ ।

यत्र स्वमतविरुद्धेषु बहुषु मतेष्वेकेन प्रबलवादिमतेन मतान्तरं निरस्य तत्स्वयं निरस्यते तैर्दूषितं च स्वमतं सद्युक्तिभिः सम्यक् स्थाप्यते तत्र कण्टकन्यायप्रवृत्तिः । कण्टकाः प्रसिद्धाः शत्रवश्च तत्र प्रथमपक्षे पादप्रविष्टं कण्टकं तथा दृढेन कण्टकान्तरेण निष्कास्यानेनापि कालान्तरे पीडा मा भवत्विति तमप्यग्न्यादौ प्रक्षिपन्ति प्रथमं पादलग्नेन तदुद्धारायानुप्रविष्टेन च कृतं व्रणादिकं यथा योग्योपायैरुपशमं नयन्ति । द्वितीयकल्पे च तथा ये शत्रवः स्वदेशोपद्रवं कृतवन्तस्तदपेक्षया प्रबलममित्रान्तरं साम-

दानरूपोपायेन वशीकृत्य तद्द्वारा तान्यराजित्य भेददण्ड-रूपोपायेन तमपि पराजयन्ते तैः कृतं स्वप्रजोत्सादनाद्युपद्रवं च स्वस्वस्थाने स्थापनादिना दूरीकुर्वन्ति नीतिनिपुणा नृपाः । तथौपनिषदा अख्यात्यात्मख्यात्यसत्ख्यातिवादानन्यथाख्यातिवादेन निरस्य तमपि निराकुर्वन्ति अनिर्वचनीयख्यातौ तैस्तर्कितं च दूषणगणमुद्धरन्तीति न्यायोदाहरणसङ्गतिः । तत्प्रकारस्तु ग्रन्थविस्तरभयान्नेह तन्यते । ७४ । ६३ ।

बाध्यं प्रबाध्य स्वयमेव बधकनिवृत्तौ विवक्षितायां तु जलकतकरेणुन्यायः । यथा हि सपङ्कजले निक्षिप्ताः कतकस्यौषधिविशेषस्य रेणवो रजांसि तस्माज्जलात्पङ्कं विलाप्य स्वयमेव विलीयन्ते तथा तत्त्वज्ञानं सविलासाज्ञानं निवर्त्य स्वयमेव निवर्त्तते । ७५ । ६४ ।

दग्धेन्धनवह्निन्यायेऽपीह बोध्यः । दग्धानीन्धनानि येन सोऽग्निर्यथा स्वयमेव शाम्यति तथेति पूर्ववत् । ७६ । ६५ ।

नन्वज्ञानबाधके ज्ञाने विनष्टे पुनरज्ञानोदयेन बन्धप्रसङ्ग इति शङ्कायां देवदत्तहन्तृहतन्यायावतारः । यथा देवदत्तहन्तरि हतेऽपि न देवदत्तस्य जीवनं तथा प्रकृतेऽपि । ७७ । ६६ ।

इदं च तुष्यतु दुर्जन इति न्यायेनोपगम्योक्तं वस्तुतस्त्वज्ञानस्यानादित्वात्तदुदयशङ्कैव नोचिता । ७८ । ६७ ।

ननु यन्निवृत्तिमद्वस्तु तदुत्पत्तिमदपीति न्यायाद्विनाशिनोऽज्ञानस्योत्पत्तिरपि संभाव्यतइति चेत्तर्हि सर्वं कार्यं सकारणकमिति न्यायाद्भावकार्यस्य तत्पूर्वकत्वनियमात्तस्य किं चित्कारणं वाच्यम् । तच्च किमज्ञानं ब्रह्म वा

आद्ये किमिदमेवाज्ञानं किमन्यद्वा आद्ये आत्माश्रयः द्वितीये ऽनवस्थाइत्युभयतःपाशा रज्जुरिति न्यायापातः । आद्यद्वितीये शुद्धं ब्रह्म तत्कारणं विशिष्टं वा नाद्यः मुक्तस्यापि पुनर्बन्धापत्तेः । द्वितीये ऽप्यज्ञानं विशेषणमन्यद्वा आद्ये अज्ञाने ऽप्यज्ञानकारणत्वापत्तिः विशिष्टवृत्तेर्धर्मस्य विशेषणवृत्तित्वनियम इति न्यायात् । अन्यथा व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायेन कारणत्वधर्मस्य विशिष्टवृत्तित्वाभावापत्तेः । न द्वितीयः । अन्यस्य सर्वस्याज्ञानकार्यत्वेन ततः प्रागसत्त्वात् । व्यभिचारी चायं यन्निवृत्तिमदिति न्यायोक्तो नियमः प्रागभावइति दिक् । ७ । ६८ ।

अथ प्रासङ्गिकाः यन्निवृत्तिमदिति न्या० । १ । ६६ ।

उभयतः पाशारज्जुरितिन्या० यथा मृगादिबन्धनायोभयत्र कृतपाशायां रज्जौ प्रविष्टं मृगादि कुतश्चिदपि मार्गाद्गन्तुं न शक्नोति तथा प्रकृते ऽपि । २ । १०० ।

विशिष्टवृत्तेरिति न्या० । दृश्यते हि कुण्डली यातीत्यादौ विशिष्टवृत्तेर्धर्मस्य गत्यादेः कुण्डलादिरूपविशेषणवृत्तित्वम् । कुण्डली भुङ्क्तइत्यादौ तु कुण्डलादेरुपलक्षणत्वाद्विशेष्यस्यैव भोजनान्वयः । न च पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेनेति न्यायात्तदनुपपत्तिः । तदपवादभूतेन व्यक्तिन्यायेन तदुपपत्तेः । स्वीक्रियते हि जातिविशिष्टव्यक्तौ शब्दशक्तिमुपगच्छद्भिरपि तार्किकैर्गौरनित्येत्यादौ पदार्थैकदेशस्यापि व्यक्तेरनित्यत्वाद्यन्वयः । पुरोडाशकपालेनेत्यादौ मीमांसकैरपि । तथा च परोपगतं पदार्थैकदेशान्वयं निराकृत्य स्वयं तदुपगच्छन्तः श्वश्रूनिर्गच्छोक्तिन्यायविषयतां नातिवर्त्तन्ते यथा भिक्षा-

मटते वटवे भिक्षां प्रत्याचक्षाणां स्वस्नुषां भर्त्सयित्वा श्वश्रूः पुनस्तमाहूय समागते तस्मिन्नास्ति भिक्षा निर्गच्छेति तथैव प्रत्याचष्टे। तथैते ऽपीत्यर्थः। ३। १०१।

अत्राप्यनुप्रसक्तं न्यायत्रयं व्याख्यातम्। ४। १०२। ५। १०३। ६। १०४।

व्यापकेतिस्पष्टः। ७। १०५।

प्रकृतमनुसरामः। इदं सविलासाज्ञानं ज्ञानेन बाधितं सद्गजभुक्तकपित्थन्यायेन न ज्ञायते कुत्र गतमिति गजभुक्तं हि कपित्थफलं तदुदराद्भग्नमेव निःसरति तच्च भग्नं सन्मज्जादिशून्यं क्षालितमिवाभातीति प्रसिद्धम्। तथा च यथा निश्छिद्रादतिकठिनात्तस्मादतिसान्द्रं तन्मज्जादि कथं निःसृतमिति न तर्कगोचरतामेति तथा तत्त्वबोधबाधितं तत्कुत्र गतमिति न तर्कितुं शक्यमित्यर्थः। ८। १०६।

सति तत्त्वज्ञाने सविलासाज्ञानं बाध्यमिति किं वाच्यं तत्त्वज्ञानात्प्रागप्यवाङ्मनसगम्ये निर्विकल्पे शुद्धाद्वितीये सच्चिदानन्दघने परे ब्रह्मणीदं दृश्यं सावयवमशुद्धमसज्जडदुःखात्मकं कथमासीदित्यपि नारिकेलफलाम्बुन्यायेन न तर्कगोचरत्वं याति। यथा ऽतिदृढावयवसंयोगवति नारिकेलफले जलं कथमागतमिति न तर्कगोचरतामेति तथा पूर्वोक्ते ब्रह्मणि तद्विपरीतद्वैतं कथमासीदित्यपि न तर्कितुं पार्यतइति न्यायसंगतिः। ८१। १०।

किं चेदमप्यन्यद्भुक्तमन्यद्वान्तमिति न्यायान्मुमुक्षूत्साहवर्द्धनार्थमेव किं चिदुच्यते तैः। वस्तुतस्तु तदनुभूतं वस्तु न शब्दशक्यम्। कथं तर्हि तद्बोधः लक्षणयेत्यवेहि उपपादितमिदं प्राक्। न्यायस्तु निगदव्याख्यातः। ८२। १०८।

द्वैतबाधकबोधस्यापि बाधो निरूपित इति न तेनापि द्वैतशङ्का । ये त्वाचार्या बाधज्ञानस्य बाध्यबाधकभेदेन द्वे रूपे तत्र बाध्यरूपेणाज्ञानादिवत्तदपि बाध्यं रूपान्तरेण च बाधकम् तथा च न कर्मकर्तृभावविरोधो ऽपि । न चाविशिष्टेन बाधकरूपेण द्वैतापत्तिः बाध्यरूपाद्भेदाभावेनास्य तद्बाधे ऽवस्थानायोगादिति मन्यन्ते तेषां स्वप्नव्याघ्रन्यायो ऽवतरति स्वप्ने दृष्टो व्याघ्रो हि स्वप्नं विलाप्य तत्र वर्त्तमानेन बाध्यरूपेण स्वयमपि विलीयते बाधकरूपस्यापि च बाध्यरूपाद्भेदाभावेनानवशेषः । ८३ । १०९ ।

ननु सविलासाज्ञानबाधकस्वभावत्वं चेद्बोधस्य तदा स्वभावो दुरतिक्रम इति न्यायात्तस्य तत्त्वज्ञानोदयानन्तरं सविलासाज्ञानबाधनाद्देहपातस्तात्कालिकः स्यात् । तथा चोच्छिन्नसंप्रदायत्वादुपनिषदामबोधकत्वलक्षणाप्रामाण्यप्रसङ्ग इति शङ्कानिरासाय यदा ज्ञानस्य नाशे ऽप्यारब्धकर्मणा प्रतिबन्धान्न देहादिक्षयः प्रारब्धकर्मणश्च भोगलक्षणकार्यक्षयादेव क्षय इति समाधीयते तदेषुवेगक्षयन्यायप्रवृत्तिः । धनुषः सकाशान्मुक्तस्येषोर्बाणस्य कर्मणः प्रारब्धवेगक्षयादेव क्षय इति प्रसिद्धम् । ८४ । ११० ।

अत्र स्वभाव इति प्रासङ्गिकः । १ । १११ ।

चक्रभ्रमणन्यायो ऽपीह बोध्यः । चक्रभ्रान्तिहेतौ कुलालव्यापारे निवृत्ते ऽपि हि भ्रान्तिक्षयो वेगक्षयादेव भवति । ८५ । ११२ ।

ननु कर्मोपादानकारणयोरिषुचक्रयोर्नाशाभावाद्युक्तं तस्य वेगक्षयपर्यन्तमवस्थानं धनुःकुलालव्यापृत्योस्तन्निमित्तत्वान्निमित्तापाये च कार्यापायादर्शनादज्ञानस्य च देहाद्युपादानत्वात्तदपाये कारणनाशे कार्यनाश इति न्यायेन

देहाद्यवस्थानायोगादिति शङ्कानिरासायोपादाननाशेऽप्युपादेयं क्षणं तिष्ठतीति समाधानविवक्षायां तन्तुपटन्यायावतारः । स्वीक्रियते हि तार्किकैरपि समवायिकारणतन्त्वादिनाशे ऽपि पटादि क्षणं तिष्ठतीति । ८६ । ११३ ।

अत्र प्रासङ्गिकः कारणनाशे कार्यनाश इति न्यायः । अत्र कारणकार्यशब्दावुपादेयोपादानपरौ । १ । ११४ ।

ननु तन्तुनाशे पटस्य क्षणमात्रमवस्थानं भवति तत्त्वविदां तु लोमशमार्कण्डेयादीनां बहुकल्पपर्यन्तमवस्थानं स्मर्यते तथा च कथमेतन्न्यायसंगतिरिति शङ्कानिरासायोच्यतस्य कतिपयदिवसैरुत्पद्य विनष्टानां तन्तूनां यादृशक्षणस्तद्योग्यः स्वीकृतस्तार्किकैरस्माभिरप्यनादेरसंख्यमहाकल्पावस्थितेरज्ञानस्य योग्यस्तादृश एव क्षण उचित उपेतुमिति समाधानराजस्य योग्यो योग्येन संबध्यतइति न्यायः सचिवतामेति । दृश्यते हि लोके ऽन्योन्ययोग्यानामेव नृपशुपक्ष्यादीनां मिथुनत्वादिसंबन्धः । सांप्रदायिकैश्चोक्तम् । तन्तूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः । भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यतामिति । अत्र भ्रमपदमज्ञानपरम् । ८७ । ११५ ।

यावच्छिरस्तावती शिरोव्यथेति न्यायो ऽपीह बोध्यः । ८८ । ११६ ।

जीवन्मुक्तिदशायां च विद्वान्ब्रह्मात्मानं हस्तामलकन्यायेनासंदिग्धाविपर्यस्तं साक्षात्पश्यति । करे स्थितमामलकीफलं निर्मलं जलं वा यथा दृश्यते तथेत्यर्थः । ८९ । ११७ ।

एतेन करस्थबिल्वन्यायोऽपि व्याख्यातः । ९० । ११८ ।

देहं च बोधात्प्रागात्मत्वेनाभिमतमपि सति बोधे

ऽहिनिर्ल्वयिनीन्यायान्न कदा ऽप्यात्मतया पश्यति । यथा सर्पः स्वत्वचं पुरा ऽऽत्मतयोपगतामपि त्यागानन्तरं स्वसमीपे वर्त्तमानामपि न कदा चिदात्मत्वेन जानाति तथेत्यर्थः । ६१ । ११९ ।

प्रपञ्चं च दग्धरशनान्यायेन निःसारतया वेत्ति । यथा दग्धा रज्जुः पूर्ववत्त्रिगुणत्वादिरूपेण प्रतीयमानापि निःसारा बुध्यते बुधैस्तथेत्यर्थः । ६२ । १२० ।

दग्धपटन्यायो ऽप्येतादृशः । ६३ । १२१ ।

कथं चिदपि नानात्वानुभवे कथमद्वैतबोध इत्याकाङ्क्षायां चित्रपटन्यायावतारः । यथा पटे स्थितानां चित्राणां न पटातिरेकेण सत्ता ऽस्ति तथा न ब्रह्मातिरेकेण द्वैतसत्ता ऽस्ति । तथा च चित्रनानात्वज्ञानेन पटैकत्वानुभवाप्रतिबन्धवत्तत्त्वविदो न प्रपञ्चनानात्वधिया ब्रह्माद्वैतधीप्रतिबन्धः । ६४ । १२२ ।

ये कारणं विना कार्यावस्थानासंभवं मन्यमानाश्चम्पकपटवासन्यायेन संस्काराख्याज्ञानालेशावशेषं विक्षेपाख्यशक्त्यवशेषं वोपगच्छन्ति तेषां मते तेन पुनः संसृत्याशङ्कोत्खातदंष्ट्रोरगन्यायेन वारणीया । यथोत्पाटितदन्तपङ्क्तिर्नागो नापकारक्षमस्तथा ऽत्रापि ज्ञेयम् । ६५ । १२३ ।

चम्पकेति प्रासङ्गिकः । यथा दूरीकृतेष्विपि पटनिष्ठचम्पकपुष्पेषु पटउपलभ्यमानो गन्धो निराश्रयगुणावस्थानायोगात्तदाश्रयं द्रव्यं कल्पयति तथा ऽत्रापीत्यर्थः । १ । १२४ ।

अपसारिताग्निभूतलन्यायो ऽपीदृशः । २ । १२५ ।

ननु विहितानिषिद्धादि कर्म कुर्वंस्तत्त्ववित्कथं न तत्फलेन युज्येतेति चेन्न । यतो निरहंकारतया कृतत्वात्त-

त्कर्माणि चित्राङ्गनान्यायेनाकर्माण्येवेति न देहान्तरमारब्धुं क्षमन्ते। यथा चित्राङ्गना स्त्रीव दृश्यमाना ऽपि न चुम्बनालिङ्गनादि फलं जनयितुं शक्नोति तथा प्रकृते ऽपीत्यर्थः। ६६। १२६।

अत्र चित्रामृतन्यायः। ८७। १२७।

चित्रालानन्यायश्च बोध्यः। ६८। १२८।

नन्वादावन्ते च यन्नास्ति वर्त्तमाने ऽपि तत्तथेति न्यायाद्ये तुच्छमेव द्वैतं मन्यन्ते तेषां ब्रह्मबोधेन सविकृत्यविद्याबाधो न स्यात् तस्य ब्रह्मस्वरूपनित्यबोधमहिम्ना सदैव बाधितत्वात्। अदग्धदहनन्यायेनाबाधितस्यैव बाधसंभवात्। न हि वन्हिर्दग्धं दहति। किं च दग्धं तथा ऽऽत्मनः स्वतःसिद्धे द्वैतादर्शने नित्यमुक्तस्यासंसारिणः शास्त्रसाध्यप्रयोजनशून्यतया शास्त्रस्योषरवृष्टिन्यायेनानर्थक्यप्रसङ्ग इति चेन्न। नित्यमुक्तस्यैवासंसारिणो ऽत्यन्तासत्संसारनिवर्त्तकतया शास्त्रप्रामाण्योपपत्तेः। नित्यबोधमहिम्ना बाधिते ऽपि द्वैते वाक्यजबोधस्य धनंजयन्यायेन बाधकत्वोपपत्तेः। यथा ऽऽहुः। नित्यबोधपरिपीडितं जगद्विभ्रमं तुदति वाक्यजा मतिः। वासुदेवनिहतं धनंजयो हन्ति कौरवकुलं यथा पुनरिति। ६६। १२२।

अथ प्रासङ्गिकाः। आदावन्ते चेति न्या०। १। १३०।

अदग्धदहनन्यायो ऽत्र विवृतः २। १३१।

ऊषरवृष्टिन्यायस्तु निगदव्याख्यातः। ३। १३२।

शवोद्वर्त्तनन्यायः। ४। १३३।

अन्धदर्पणन्यायः। ५। १३४।

श्वपुच्छोन्नामनन्यायः। ६। १३५।

अरण्यरोदनन्यायः। ७। १३६।

मूर्खसेवनन्यायश्चापीदृशः । सर्वे ऽप्येते वैयर्थ्यबोधकाः स्पष्टाश्च । ८ । १३७ ।

समुद्रवृष्टिन्यायमपि के चिदुदाहरन्ति । ९ । १३८ ।

ननु जीवत्वस्याज्ञानतन्त्रतया तद्बाधे बाधात्तद्विशिष्टस्य जीवस्य बाधः स्यात् । तथा चाद्वैततत्त्वारोहणं जीवस्य तालसर्पन्यायात्स्वनाशाय स्यात् अवरोहणसमयऊर्ध्वमुखैस्तालग्रन्थिभिः सर्पोदरविदारणात्तालारोहणं सर्पस्य स्वनाशायेति प्रसिद्धम् । एवं च प्रेक्षावतां तत्त्वावबोधहेतुश्रवणादिप्रवृत्तिर्न स्यादिति चेन्न रोगिन्यायेन प्रवृत्त्युपपत्तेः । यथा रोगनाशाद्विशेषणाभावे विशिष्टाभाव इति न्यायेन रोगविशिष्टस्य नाशे ऽपि शुद्धस्य तत्स्वरूपस्यानाशाद्रोगिणस्तन्नाशके भेषजादौ प्रवृत्तिस्तथेत्यर्थः । १० । १३९ ।

प्रासङ्गिको ऽत्र तालसर्पन्यायो व्याख्यातः । १ । १४० ।

विशेषणाभाव इति तु स्पष्टः । २ । १४१ ।

नन्वज्ञानकार्यान्तःकरणवृत्त्यात्मकं ज्ञानं कथं स्वकारणीभूताज्ञाननाशाय स्यादुपजीव्यविरोधादिति चेदश्वतरीगर्भन्यायादित्यवेहि । बडबायां गर्दभादुत्पन्ना ऽश्वतरी तस्या गर्भो यथा तन्नाशाय भवति तथा भवतु ज्ञानमपि स्वहेत्वज्ञाननाशायेत्यनवद्यम् । १०१ । १४२ ।

वृश्चिकीगर्भन्यायो ऽपीदृक् । १०२ । १४३ ।

कदलीफलन्यायो ऽपि च । १०३ । १४४ ।

कार्यकारणाभेदपक्षे ऽपि नानुपपत्तिः किमज्ञानस्य दुष्करमिति न्यायात् । १०४ । १४५ ।

अस्मिन्बोधे शमादिसाधनसंपन्नस्यैवाधिकारः । शान्तो दान्त इत्यादिशास्त्रोपदेशो हि व्याघ्रीक्षीरन्यायेन

तत्रैव सत्पात्रे प्रतिष्ठां लभते यथा तत्सुवर्णपात्रएव तिष्ठति फलाय च भवति तथेत्यर्थः । १०५ । १४६ ।

शमादिमानप्यमेधावी न श्रवणाद्यधिकारी तत्रापि कृत उपदेशो बधिरकर्णजपन्यायेन पूर्वोक्तान्धदर्पणादिन्यायैश्च व्यर्थतामेति । तदुक्तं वासिष्ठे । यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यतीति । १०६ । १४७ ।

शिष्यवैराग्यादिपरीक्षा चादावेव कर्त्तव्या न हि विवाहानन्तरं वरपरीक्षा क्रियतइति न्यायात् । १०७ । १४८ ।

पश्चात्कृतायास्तु परीक्षायाः कृते कार्ये किं मुहूर्त्तप्रश्नेनेति न्यायेन व्यर्थता । १०८ । १४९ ।

किं च यः शूर्पन्यायेन सतां गुणानेव गृह्णाति स एव शिष्यत्वेन स्वीकार्यः । शूर्पो हि बुसादि त्यक्त्वा शुद्धमन्नमवशेषयतीति प्रसिद्धम् । १०९ । १५० ।

भ्रमरन्यायो ऽप्येतादृशः । सो ऽपि कण्टकादीन्परित्यज्य पुष्पादीनां गन्धगुणमात्रमादत्ते । ११० । १५१ ।

यस्तु चालिनीन्यायेनासारमात्रग्राही स नादर्त्तव्यः । १११ । १५२ ।

अत्र मक्षिकान्यायः । ११२ । १५३ ।

जलौकान्यायश्च बोध्यः । मक्षिका सर्वं देहं परित्यज्य व्रणमेवावलम्बते । जलौका ऽपि स्त्रीस्तनाग्रे लग्ना क्षीरं त्यक्त्वा रुधिरं पिबतीति प्रसिद्धम् । ११३ । १५४ ।

चिरं परीक्ष्यश्च शिष्यः । यतः केषु चिदव्यवसायात्मकबुद्धिषु विशेषेण दृश्यमानान्यपि साधनानि रासभरटितन्यायेन क्रमेण क्षीयन्ते । यथा गर्दभशब्द आदावत्यु-

श्चैरुपलभ्यते पश्चान्मन्दतां प्राप्नुवन् क्रमेण क्षीयते तथेत्यर्थः । ११४ । १५५ ।

अत्र पूर्वाह्णच्छायान्यायः । ११५ । १५६ ।

खलमैत्रीन्यायश्च बोध्यः । ते अप्यादौ वृद्धिं प्राप्य पश्चात्क्रमेण क्षीयेते । ११६ । १५७ ।

धीरेषु तु सज्जनेष्वादौ स्वल्पान्यपि साधनानि कुक्कुटध्वनिन्यायेन क्रमेण वर्द्धन्ते । ११७ । १५८ ।

इह पराह्णच्छायान्यायः । ११८ । १५९ ।

साधुमैत्रीन्यायश्च बोध्यः । ११९ । १६० ।

अवश्यं परीक्ष्यश्च शिष्यः यतो न हि पवित्रं स्याद्गोक्षीरं श्वदृतौ धृतमिति न्यायेनासत्पात्रे सदुपदेशोऽप्यपवित्रतां याति । १२० । १६१ ।

अपि च विधेयं हि स्तूयते वस्त्वितिन्यायेन विद्योपायानतिप्रशस्तबहुफलकथनेन संस्तुत्य तेषु श्रद्धातिशयमुत्पाद्य शिष्यं प्रवर्त्तयेत् । दृश्यते हि लोकेऽप्येतां गां क्रीणातु भवानिति विधिशेषस्य बहुक्षीरेत्याद्यर्थवादस्य तत्क्रयणप्रवृत्तिहेतुत्वम् । १२१ । १६२ ।

किंच कृतकृत्यस्य तत्त्वविदोऽतत्त्वविदुद्धारातिरिक्तकर्त्तव्याभावाद्यथा तदुद्धारः स्यात्तथैव कर्त्तव्यम् । सुरेन्द्रादिपूज्येनापि विदुषा पित्रा मृतस्तनन्धयन्यायेनाज्ञोऽनुसर्त्तव्यः । तैर्निन्द्यमानोऽपि देहस्य निन्द्यत्वमात्मनोऽवाङ्मनसगम्यत्वं च जानन्नोद्विजेत् । किं तु प्रत्युत तच्चेष्टानुसारेण स्वयमप्याचरेत् । १२ । १६३ ।

इह राज्ञाऽनुगतविवाहप्रवृत्तभृत्यन्यायोऽपि प्रवर्त्तते । विवाहप्रवृत्तो भृत्यो राज्ञाऽप्यनुगम्यतइति प्रसिद्धम् । १२३ । १६४ ।

कांस्यभोजिन्यायो ऽप्येतादृशः । तस्यायमर्थः । मया नित्यं गुरूच्छिष्टं भोक्तव्यं कांस्यपात्रे च भोक्तव्यमिति नियमवतो विनेयस्य नियमाभङ्गाय गुरुर्नित्यं कांस्यपात्रे भुङ्क्तइति । यद्यप्ययमशास्त्रीयस्तथा ऽप्येतद्व्यवहारस्य लौकिकत्वात्सुन्दोपसुन्दन्यायवल्लौकिकेषु परिगणितः सुन्दोपसुन्दवधवृद्धकुमारीवरादिनिरूपकशास्त्राणामपि तदानींतनजनप्रसिद्धतदनुवाद इति बोध्यम् । १२४ । १६५ ।

एवं वैशेष्यात्तु तद्वाद इति न्यायो ऽपि मल्लग्रामादिरूपलौकिकव्यवहारमूलकत्वाल्लौकिकेषु गणनीयः । १२५ । १६६ ।

एवं शिष्येणापि यथाशास्त्रं परीक्ष्यैव परमशीलसंपन्नो ऽनृशंसः श्रोत्रियो ऽद्वैतनिष्ठो गुरुराश्रयणीयः । यदि चापरीक्ष्यैवातिश्रद्धालुतया विप्रलम्भकमेव कं चिदाचार्यत्वेनाश्रयेत मुमुक्षुः । स चाज्ञस्य मुमुक्षोरहंकारादिरूपमचेतनमनात्मानमात्मेत्युपदिशेत् । स च शिष्यः श्रद्धालुत्वेनान्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत् । तद्व्यतिरिक्तं चात्मानं न प्रतिपद्येत तथा सति पुरुषार्थाद्धिहन्येतानर्थं च प्राप्नुयात् । न्यायार्थस्त्वेवम् । कश्चित्किल दुष्टात्मा महारण्यमार्गे पतितमन्धं स्वबन्धुं पुरे जिगमिषुमुवाच किमत्र त्वया दुःखिनेन स्थीयतइति । स चान्धः कर्णामृतं वचनमाकर्ण्य तमाप्तं मत्वा बभाषे अहो मद्भागधेयं यदत्रभवान्मां दीनं स्वाभीष्टपुरे प्राप्तुमसमर्थं ब्रूषइति स च विप्रलिप्सुर्दुष्टं गोयुवानमानीय तदीयं लाङ्गूलमन्धं ग्राहयामास उपदिदेश च एष गोयुवा त्वां स्वपुरं नेष्यति मा त्यजैतस्य लाङ्गूलमिति । स चान्धस्तद्वचनश्रद्धया

तदत्यजन्स्वाभीष्टं पुरमप्राप्यानर्थपरम्परां प्राप्तवानिति । १२६ । १६७ ।

यो भूलिङ्गन्यायेन परोपदेशमात्रकुशलः स्वयं च यथेष्टाचरणशीलः सोऽपि दाम्भिकत्वात्त्यक्तव्यः भूलिङ्गाख्यः पक्षी मा साहसं कुर्विति पुनः पुनरुच्चैर्वदन्सिंहदंष्ट्रान्तलग्नं मांसलवं जिघृक्षतीति प्रसिद्धम् । १२७ । १६८ ।

यदि च स प्रतारको न भवति किं तु मूर्खस्तदाऽपि न स आश्रयणीयः । तदाश्रयणेऽपि नाभीष्टसिद्धिः । अपि त्वनर्थप्राप्तिरेव भवति । अन्धस्येवान्धलग्नस्य विनिपातः पदे पदइति न्यायात् १२८ । १६९ ।

किमादावेव गुरुपरीक्षणेन चिरसहवासादिना वञ्चकत्वेन मूर्खत्वेन वा ज्ञातश्चेत्त्यक्तव्यः । नैवं प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात्परीक्षया पूर्वमेव त्यागस्योचितत्वात् । १२९ । १७० ।

अत्र श्वः कर्त्तव्यमद्य कुर्विति न्यायोऽप्यवतरति । १३० । १७१ ।

ननु किमाचार्यपारतन्त्र्यादिक्लेशेन स्वयमेव मेधाविना वेदान्तविचारेण तत्त्वज्ञानं संपादनीयमिति शङ्कानिरासाय स्वकरकुचन्यायप्रवृत्तिः यथा स्वकरेण स्वकुचयोर्मर्दनं कुर्वती युवती न सुखं लभते तथा जिज्ञासुरपि न स्वतन्त्रविचारेण ज्ञानमाप्नोति । तथा च श्रुतिः । आचार्यवान्पुरुषो वेद प्रोक्तान्येनैव सुज्ञानाप्रेष्ठेत्यादि । १३१ । १७२ ।

ननु स्वतन्त्रविचारेण तत्त्वज्ञानासंभवादुपदेष्टृणां च प्रतारकत्वशङ्कास्पदत्वात्प्रत्युत तेभ्योऽनर्थप्राप्तिशङ्कासंभवेन तद्भिया त्याज्य एव गुर्वधीनो ब्रह्मविचार इति चेन्न शास्त्रोक्तप्रकारेण सम्यक्परीक्षया साधुत्वासाधुत्वनिर्धा-

रणादसाधुत्यागसाध्वाश्रयणयोः संभवेन भिक्षुभिया स्थाल्यनधिश्रयणन्यायेनासाधुकृतप्रतारणभिया ब्रह्मविचारत्यागायोगात् । १३२ । १७३ ।

इह मृगभिया सस्यानाश्रयणन्यायः १३३ । १७४ ।

यूकाभिया कन्थात्यागन्यायश्च प्रवर्त्तते । १३४ । १७५ ।

ननु गुर्वधीनविचारजन्यज्ञानेन पूर्वोक्तप्रकारेण कार्यकारणोपाधिबाधे ऽप्येकदेशविकृतमनन्यवदितिन्यायेन जीवत्वानपायान्नाभीष्टब्रह्मत्वसिद्धिरितिचेन्न । स्फटिकलौहित्यन्यायेन तन्निवृत्त्युपपत्त्या ब्रह्मभावसिद्धेः । न ह्युपाधिजीवयोः पुच्छश्वादिवदवयवावयविभावो ऽस्ति येन च्छिन्नपुच्छादिश्वादेः श्वभावाद्यनिवृत्तिवन्निवृत्तोपाधेरपि जीवस्य जीवत्वानिवृत्तिः स्यात् । किं तु स्फटिके जपाकुसुमादिसन्निधिकृतलौहित्यस्य यथा तन्निवृत्तौ निवृत्तिः । यथा वा घटाद्यवच्छेदककृतस्याकाशे परिच्छिन्नत्वस्य घटाद्यभावे ऽभावः । यथा वा जलाद्युपाधिकृतस्य स्वदेहे ऽधोमुखत्वादेस्तदपगमे ऽपगमस्तथा ऽऽत्मन्युपाधितन्त्रस्य जीवत्वस्य तद्बाधाद् बाधः १३५ । १७६ ।

अत्रैकदेशेति न्यायः प्रसङ्गाद्व्याख्यातः । ११ । १७७ ॥

आकाशपरिच्छिन्नत्वन्यायः । २ । १७८ ॥

देहाधोमुखत्वन्यायश्च प्रकृतन्यायविषये ऽर्थतः पठितौ । ३ । १७९ ।

कौन्तेयराधेयन्यायस्याप्यत्र संचारः । यथा कर्णः कौन्तेय एव सन्कौन्तेयत्वाज्ञानाद्राधेयमात्मानं मेने पश्चादाप्तोपदेशेन कौन्तेयमात्मानं मन्यते स्म तथा ब्रह्मैव स्वरूपाज्ञानाज्जीवमात्मानं मन्यते गुरूपदिष्टमहावाक्यजबोधादबोधबाधे ब्रह्मैवाहमिति मन्यतइति । १३६ । १८० ।

राजपुत्रव्याधन्यायसिंहमेषन्यायावपीह बोध्यौ । राजपुत्रः कश्चित्कया चित्स्वमातृसपत्न्या क चिन्निक्षिप्तो व्याधवशं प्राप्तस्तेन पुत्रत्वेन पालितश्च व्याधमेवात्मानं जानीते स्म । पश्चात्कथं चित्तद्राजपुत्रत्वं निश्चितवतां मन्त्रिणामुपदेशाद्राजानमात्मानं मत्वा पैत्रसिंहासने प्रतिष्ठां प्राप । सिंहशावको ऽपि कथं चिद् ग्रामीणवशं प्राप्तो मेषैः सह चरन्युवा ऽपि संस्तेषु विविधरूपकृतं लम्बकर्णत्वालम्बकर्णत्वसशृङ्गत्वाशृङ्गत्वादिकृतं च विशेषं पश्यन्नात्मानमपि मेषविशेषमेव मेने दूर्वादिकं च बुभुजे । पश्चाद्वन्यसिंहोपदेशेन मृगराजमात्मानमपश्यदिति गाथे लोकप्रसिद्धे । १३७ । १८१ । १३८ । १८२ । ॥

ननु पूर्वं जीवन्मुक्तिः प्रतिपादिता इदानीमपि बोधेनाबोधबाधे ब्रह्मैवाहमिति मन्यतइत्युक्तया सूचिता न तु सोपगन्तुं युक्ता निष्प्रयोजनत्वात् । प्रयोजनमनुद्दिश्य न मन्दो ऽपि प्रवर्त्ततइति न्यायेन तदुपगमायोगात् । विदेहमुक्तेरेव सविलासाज्ञानबाधेन सर्वसत्तास्फूर्त्तिप्रदस्वमात्रातर्कितब्रह्मादिब्रह्मानन्दात्मना ऽवस्थानलक्षणायाः परमपुरुषार्थत्वात् । अतः पिण्डं हित्वा करं लेढीति न्यायाद् ब्रह्मानन्दलेशभूतविषयानन्दविद्यानन्दाद्यनुभवहेतुभूताया घटप्रदीपन्यायेन स्वोपाधितत्सम्बद्धार्थमात्रस्फूर्त्तिहेतुभूतायाश्चाङ्गीकृतिर्व्यर्थैव । ब्रह्मर्षिविद्यासंप्रदायस्थित्यर्थं तदुपगम इति चेन्न । स्वाज्ञानकल्पिताचार्येणापि स्वप्नमन्त्रलाभन्यायेन तल्लाभसम्भवादिति चेन्मैवं श्रुत्यादिमानसिद्धाया बहुभिरङ्गीकृतायाश्च प्रयोजनाभावापराधेन निरस्तुमशक्यत्वात् । वस्तूनि मानान्यपेक्षन्ते न प्रयोजनानीति न्यायात् बहूनामनुग्रहो न्याय्य इति न्यायाच्चेत्यलम् । अस्मिन्ग्रन्थसन्दर्भे न्यायषटकं लिखितं तदनूद्यते

साक्षात्परम्परया च तत्रत्यघटप्रदीपन्यायसङ्गता अन्येऽपि न्याया लिख्यन्ते। प्रयोजनमनुद्दिश्येति न्या० १। १८२।

पिण्डमिति न्या०। २। १८३।

घटप्रदीपन्या०। यथा घटनिष्ठो दीपो घटस्योदरमात्रं भासयति तथा ऽत्रापीत्यर्थः। ३। १८४।

चक्षुरादिद्वारा बहिर्निर्गत्यैव जीवोपाधिभूता धीर्घाह्यविषयान्व्याप्नोति तद्योगाच्च चिदाभासो ऽपि निःसृत इव प्रतीयतइति विवक्षायां बहुच्छिद्रघटप्रदीपन्यायो ऽवतरति। अयं भगवत्पादैः संक्षेपेण भाष्यतात्पर्यप्रकाशके श्रीदक्षिणामूर्त्तिस्तोत्रे सोदाहरणमुक्तः। नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते। जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तयइति। ४। १८५।

चक्षुरादिद्वारा बहिर्निःसृतस्यान्तःकरणस्य मूषासिक्तताम्रन्यायेन विषयाकारता भवति। तदुक्तं भगवत्पादैः मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा। रूपादीन्व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवमिति। ५। १८६।

ननु ताम्रादेस्तेजः संयोगाद् द्रवस्य शीतलकठिनमूषाभिघातेन शैत्यापत्तौ मूषाकारतापत्तावप्यमूर्त्तस्यान्तःकरणस्य ताम्रादिविलक्षणतया विषयव्याप्तावपि कथं तदाकारतापत्तिरिति शङ्कानिरासाय व्यञ्जकव्यङ्ग्यन्यायो ऽवतरति। यथा व्यञ्जक आतपादिर्व्यङ्ग्यस्य घटादेराकारतामेति तथेत्यर्थः। ६। १८७।

दाहकदाह्यन्यायो ऽपीदृशः। दृश्यते हि विगतज्वालस्य दाहकस्याग्नेर्दाह्यकाष्ठाद्याकारता। एते न्याया आ-

त्मन्यपि प्रवर्त्तन्ते । भवति हि तस्यापि तत्तदुपाधिसंसर्गात्तत्तदाकारतया भानं रूपं रूपं प्रतिरूपो बभूवेत्यादिश्रुतेः । ७ । १८८ ।

क्रमेण स्वेच्छया बुद्धेर्विविधरूपग्राहकत्वविवक्षायां शैलूषीन्यायः । शैलूषी नटी सा यथा क्रमेण विविधरूपाणि धत्ते तथेत्यर्थः । ८ । १८९ ।

एकं विषयमभीष्टतया गृह्णाति ततो ऽभीष्टतरविषयान्तरलाभे पूर्वं त्यक्त्वा तं तथात्वेनादत्ते एवमग्रे ऽपीति धियः स्वभावः एकस्मिन्विषये बुद्धेः क्रमेण सर्वेन्द्रियविषयसम्बन्धे च नटाङ्गनान्यायो ऽवतार्यते । रङ्गभूमावागतां नटभार्यां यो यो नटः पृच्छति कस्य भार्या ऽसि सुश्रोणीति सा तं तं प्रति तवैवेति वदतीति प्रसिद्धम् । ९ १९० ।

अन्यासाधारणधर्मस्यान्यत्रारोपविवक्षायां जलौष्ण्यन्यायः । १० । १८१ । वायुशैत्यौष्ण्यन्यायः । ११ । १९२ ।

भूशैत्यौष्ण्यन्यायश्चावतार्यते । जले स्वाभाविकं शैत्यम् । उष्णत्वं तु तेजः संयोगात्तद्धर्माध्यासो ऽत्र भुवो वायोश्चानुष्णाशीतत्वं स्वभावः । जलाग्न्यादिसंपर्कादुष्णत्वादितद्धर्मारोपः । एवं प्रकृते ऽपि बोध्यम् । १२ । १९३ ।

लोहाग्निन्यायस्तु परस्परधर्माध्यासतादात्म्याध्यासयोर्विवक्षायां प्रवर्त्तते । लोहो दहति त्रिकोणो ऽग्निरित्याद्यनुभवात् । १३ । १९४ ।

अहिभुक्कैवर्त्तन्यायस्तु तादात्म्याध्यासएव ज्ञेयः श्रूयते हि लोके कश्चिदहिभुग्नावमारुरोह स च तत्र बहुजनसमुदायं दृष्ट्वा केन चिन्मे विनिमयो न स्यादिति धिया स्वपादे रज्जुं बद्ध्वा तन्द्रां प्राप । कैवर्त्तश्चापहासार्थं तत्पा-

दात्तां मोचयित्वा स्वपादे बबन्ध । नावि पारं गतायामवरोहणसमये ऽहिभुक् स्वपादे रज्जुमदृष्ट्वा कैवर्त्तपादे च तां दृष्ट्वा ऽहमयमयमहमिति स्वहृदि निश्चित्यारे कैवर्त्त त्वमहमहं च त्वमिति तेन विवादं कृतवानिति । अहिर्नामोन्मादकर औषधिविशेषः । पोस्तेति पाश्चात्त्यभाषया । एवमन्ये ऽपीदृशा बहवो न्यायाः सन्ति ग्रन्थविस्तरभयात्सास्याच्च नेह लिख्यन्ते । प्रागपि यत्रैकविषये बहुन्यायप्रदर्शनं तत्रैवमेव बोध्यम् । १४ । १६५ ।

अस्मिंश्चाध्यासे ऽज्ञानं कारणं तत्त्वज्ञाने वातदीपन्यायेन तन्निवृत्तावस्नेहदीपन्यायेन तदध्यासो ऽपि निवर्त्तते । न च ज्ञानेनैवोभयनिवृत्तिः कुतो न स्यात् । ज्ञानमज्ञानस्यैव निवर्त्तकमिति न्यायविरोधत् । द्विविधा हि निवृत्तिः विरोधिना सामग्रीनिवृत्त्या च यथा वातादिना दीपनाशः यथा च तैलवर्त्त्यादिनिवृत्त्या दीपनिवृत्तिः । तत्राद्या निवृत्तिरज्ञानस्य द्वितीया कार्यवर्गस्येति बोध्यम् । अत्र न्यायत्रयं व्याख्यातम् । १५ १६७ । १७ । १६८ ।

जाग्रदादौ बुद्धौ सत्यां दुःखादयो दृश्यन्ते सुषुप्त्यादौ तन्निवृत्तौ नोपलभ्यन्तइति तद्धर्मा एव नात्मधर्माः सुषुप्तावप्युपलब्धिप्रसङ्गादित्यत्र तदागमे हि दृश्यतइति न्यायो ऽवतरति । दृश्यते हि तैलादनुद्भूतस्पर्शतेजोऽवयवागमे संतापोपलब्धिरिति तद्धर्म एव न तैलादिधर्म इति । १८ । १६६ ।

अज्ञाननिवृत्तौ चाप्रतिबद्धसाक्षात्कारो हेतुः अज्ञानोपलब्धौ च वध्यघातकन्यायेन तदभावो ऽवबुध्यते । यथा हि भुजङ्गादिभूषितां वनभूमिं दृष्ट्वा भुजङ्गमुगादेरभावो ऽवगम्यते । २६ । २०० ।

खादकघातकन्यायस्तु तत्र प्रवर्त्तते यत्र कथं चित्परम्परया हेतोरप्युपचारेण साक्षाद्धेतुत्वमुच्यते । यदि छागादिखादका नरा नस्युस्तर्हि घातका इति खादका एव घातका इति न्यायार्थः । कुमारीन्यायोदाहरणमस्यापि बोध्यम् । २० । २०२ ।

एतदज्ञानानेकत्ववादिनां कल्पनागौरवशङ्का बालाग्रशतभागो ऽपि न कल्प्यो निष्प्रमाणकः । प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीति न्यायेन वार्यते । २१ । २०२ ।

सदसतोरुत्पत्तिनिवृत्त्यसंभवेन परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायप्रसिद्धस्य सत्त्वस्यासत्त्वस्य वा ऽनुपपत्तेर्गलेपादुकान्यायेनाज्ञानकार्यस्य बाधानुपपत्त्या चाज्ञानस्यानिर्वचनीयत्वं बलात्स्वीकार्यते । यथा कस्य चिद्गृहस्थस्य गृहे ऽन्नाद्यर्थित्वच्छलेनागतो निषण्णश्च कश्चिद्विटस्तेन तत्त्वतो ज्ञात्वा गच्छ गच्छेति पुनः पुनरुच्यमानो ऽपि यदा धौर्त्येन स्वेच्छया गमनं न स्वीकरोति तदा पादुकासहितं पदं गले निधाय नोदयित्वा च बलान्निःसार्यते तथा प्रकृते ऽपि बोध्यम् । अत्र न्यायद्वयमुदाहृतम् । १३ । २०४ ।

यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेद स इति न्यायेन च यस्यानात्मनि देहादावात्मभ्रमो ऽस्ति तस्याज्ञानमस्तीति कल्प्यते । २४ । २२५ ।

विचारपाटवेन यावद्यावद्विवेकदार्ढ्यं भवति तावत्तावद्भ्रमशैथिल्यं जायते तरतमभावापन्नसाधनायत्तं फलं तरतमभावापन्नमिति न्यायात् । २५ । २०६ ।

विचारविषयत्वं च न नाज्ञातस्य नापि निश्चितस्य

किं तु संदिग्धस्य संदिग्धं सप्रयोजनं च विचारमर्हतीति न्यायात् । २६ । २०७ ।

ये तु ब्रह्मावबोधहेतुविचारं विहायान्यत्र रतिं कुर्वन्ति ते चिन्तामणिं परित्यज्य काचमणिग्रहणन्यायं नातिवर्त्तन्ते । २७ । २०८ ।

एतस्माद्विचारादुद्वेगेन न निवर्त्तते चेदवश्यमनर्थनिवृत्तिहेतुं ब्रह्मावबोधं प्राप्नोत्येवेति विवक्षायां टिट्टिभन्यायप्रवृत्तिः । अत्र संप्रदायविद आख्यायिकामाचक्षते कस्य चिट्टिट्टिभाख्यस्य पक्षिणोऽण्डानि तीरस्थान्युदधिरुत्सेकेनापजहार । स च पक्षी एनं शोषयामीति प्रवृत्तो भार्यादिभिर्बहुधा वार्यमाणो ऽपि नोपरराम । प्रत्युत तानपि सहकारिणो वव्रे । तांश्च पतनोत्पतनाभ्यां बहुधा क्लिश्नतः सर्वानवलोक्य कृपालुर्नारदस्तत्समीपे गरुडं प्रेषयामास ततस्तत्पक्षवातेन शुष्यन्समुद्रो भीतोऽण्डान्यानीय पक्षिणे ददाविति । तथा च यथा दृढाध्यवसायस्य पक्षिणो गरुडसाहाय्यादण्डलाभस्तथा दृढबुद्धेर्जिज्ञासोरतिदुर्लभस्यापि तत्त्वज्ञानस्येशानुग्रहात्सुखेन लाभो भवति । २८ । २०९ ।

यः सारासारविवेकधिया समूलं द्वैतमसारं मत्वा त्यक्त्वा च सारं वस्तु गृह्णाति तस्य न ततो ऽर्थान्तरे ऽभीप्सुत्वमतिर्भवतीति विवक्षायां पतिंवरान्यायावतारः । यथा स्वयंवरा कन्या ऽन्यांस्त्यक्त्वा सर्वोत्तमत्वेनाभिमतं यमभीप्सितमत्वेनादत्ते न ततो ऽन्यत्राभीप्सुत्वमतिं कुरुते तथा प्रकृते ऽपीत्यलम् । २९ । २१० ।

स्वप्ने मन्त्रलाभन्या० । उपासकस्य स्वप्ने दृष्टात्स्वेष्टदेवान् मन्त्रलाभस्तज्जपादिष्टसिद्धिश्च भवतीति तान्त्रिकेषु प्रसिद्धम् । तथा पुण्यपुञ्जसहकृतस्वाविद्याकल्पितेन गुरुणा ब्रह्मविद्यालाभो भविष्यतीत्यर्थः । ३० । २११ ।

वस्तूनीति न्या० । १३८ । २१३ ।

बहूनामनुग्रहो न्याय्य इति न्या० । अत्र न्यायषट्के इदं न्यायद्वयं प्राधान्येन विवक्षितम् । अनुग्रहः साहाय्यं न्याय्यः न्यायादनपेतो ऽर्थात्तदुपेतः कार्यसाधक इति यावत् । यथा ऽऽहुः । बहूनामप्यसाराणां मेलनं कार्यसाधकम् । तृणैः संपाद्यते रज्जुस्तया नागो ऽपि बध्यत-इति १६६ । २१४ ।

केचित्त्वेतन्न्यायान्तरत्वेनोदाहरन्ति । असाराणामपि बहूनामित्यन्वयः । १४० । २५ ।

पूर्वोक्तस्य तत्त्वज्ञानस्य जीवन्मुक्तिसुखातिशयाविर्भावकत्वे वैराग्यादि सहकारि भवति । ज्ञानं च विषयमिथ्यात्वबोधनेन वैराग्यादिपोषकं भवतीति तयोरन्योन्यसाहाय्यं वनव्याघ्रन्यायाद्भद्रनक्रन्यायाच्च बोध्यम् । यथा वनव्याघ्रयोर्ह्रदनक्रयोश्च परस्परवियुक्तयोः शबरधीवराभ्यां प्रधर्षणीयता भवति युक्तयोस्तु परस्परसाहाय्यमाचरतोर्दुर्धर्षता भवति तथा प्रकृते ऽपि बोध्यम् । किं च यतो वेत्याद्यागमस्य क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानस्य चेतरेतरसाहाय्यमप्यनयोर्न्याययोरुदाहरणम् । तथा हि । सत्यप्यागमश्रवणे जगतः कर्त्ता कश्चिदस्ति न वेति संदिहानं प्रति यत्र यत्र घटादिषु कार्यत्वमस्ति तत्र सर्वत्र सकर्तृकत्वं दृष्टमिति कार्यत्वं भूयोगृहीतसहचारत्वेन कर्त्तुरस्तित्वकोटिमुत्कटामापादयति । तावन्मात्रेण संभावितमतिर्बोध्यः श्रुत्या सुखेन बोधयितुं शक्यः । एवं न केवलानुमानेनापि परात्मा यथावदवगन्तुं शक्यः । अनेन हि जगदुपयोगिकृत्यादिमानेकस्तद्गतं कृत्यादिकं नित्यं सर्वविषयं च यदि सिध्ये-

त्तदा खलु संसारिवैलक्षण्यं तत्र सिध्येन्न तु तदस्ति कार्यत्त्वहेतोस्तत्र सामर्थ्याभावात्। स हि कर्त्तारमपेक्षते तदेकत्वे कृत्यादिनित्यत्वादौ चोदासीन एव। किं च यथा किंचित्कार्यमसंप्रदानकं किं चिन्नेति किं चित्कार्यं सोपदानकं किं चिन्नेति तथा किं चित्सकर्त्तृकं किं चिन्नेत्यस्तु। एवं च लोके कृतकत्वेन घटादिव्यवहारो ऽकृतत्वेनाङ्कुरादिव्यवहारश्चोपपद्यते। तस्मान्न केवलानुमानेनेशसिद्धिः। अनुमानापेक्षा च श्रुतेरसंभावनादिपुरुषापराधनिवृत्तये न तु प्रमित्युत्पत्तौ तत्फले वा वेदान्तानां सापेक्षताप्रसङ्गात्। तदुक्तं सर्वज्ञमुनिभिः। स्वाध्यायवन्न घटते करणं विचारो नाप्यङ्गमस्य परमात्मधियः प्रसूतौ। सापेक्षता ऽऽपतति वेदगिरस्तथात्वे ब्रह्मात्मनः प्रमितिजन्मनि तन्न युक्तमिति। १४। २१६ १४२। २१७।

रथबडबान्यायो ऽपीह प्रवर्त्तते। रथे नियुक्ते बडबे रथबडबे तद्विषयो न्यायः। ते यथा मिलित्वैव रथं वाहयतः वियुक्ते तु न शक्नुतो वोढुं परस्परस्नेहातिशयात्कुरुतश्च हेषणं तथा श्रुतियुक्ती अप्रतिबद्धसाक्षात्कारं बोधं शमादिरूपं च जीवन्मुक्तिसुखं मिलित्वैव निर्वाहयन्ति वियुक्ताश्च तदर्थमितरेतरमाकाङ्क्षन्तीति पूर्वोक्तं सर्वमनुसंधेयम्। १४३। २१८।

ननु निर्दोषमानजस्य तत्त्वसाक्षात्कारस्य पुरुषापराधमात्रात्कथमबाधनिवर्त्तनाक्षमत्वं येन तन्निरासायानुमानाद्यपेक्षा भवेदिति चेद्भच्छुन्यायेन भैरवन्यायेन चेत्यवेहि। इत्थं हि लौकिकी गाथा। भच्छुर्नाम कस्य चिद्राज्ञः सचिवस्तदाज्ञया दूरदेशं तत्रत्यदस्युवधार्थं गतः। तान्हत्वा ऽपि तद्देशमर्यादास्थापनार्थं तत्र चिरं विलम्बिते तस्मिंस्तच्छत्रुभूताः सचिवा दस्युकर्त्तृकं तस्य वधं निखि-

लनगरे घोषयित्वा राज्ञे ऽपि साभिज्ञानं निवेदितवन्तः आगतांस्तत्समाचारपत्रांश्च मध्ये विलोपयामासुः स च कियत्कालानन्तरं स्वस्यानुयायिनः कांश्चित्तत्र स्थापयित्वा नृपदर्शनायागतो मार्गे स्वारिभिः समस्तपुरे घोषयित्वा राज्ञे निवेदितं स्ववधवृत्तान्तं श्रुत्वा दैवविपर्ययाद्विपरीतबुद्धिः सेना बहिः स्थापयित्वैकाकी राजसद्मान प्रविश्य नृपं दिदृक्षुः क्व चिद्गृहारामकुञ्जे तस्थौ राजा च प्रातर्बहिर्निःसृतस्तं साक्षाद्दृष्ट्वा ऽपि पूर्वोक्तमरिवाक्यस्मरणजविपरीतभावनावशात्पिशाचतां गतो ऽयमिति मेने इति । १४४ । २१९ ।

एवं भैरवनामा कश्चिद्विप्रश्चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृप इति न्यायमुल्लङ्घ्य क्षितिपतिकृतसत्कारातिशयजनितोत्सेकोद्रेकात्क्रमप्यगणयन्सर्वैर्नृपानुगैर्विरुरोध । अतस्तैस्तावत्तस्य राजसभाप्रवेशं निरुध्य तन्मरणं च राज्ञे निवेद्य कतिपयदिनानन्तरं तत्पिशाचभावो ऽपि निवेदितः । स च कदा चिद्राज्ञि मृगयाविहारिणि सति तत्समागमेच्छया निरोधकभिया मार्गाश्वत्थमारुह्य तस्थौ राजा चाश्वत्थारूढमूर्द्धबाहुं भैरवो ऽहं नृप शार्दूल मां द्रष्टुमर्हसीत्याद्याक्रोशन्तं तं पिशाचमवधार्य ततो विमुखो बभूवेत्यपि लौकिकी गाथा । तथा च यथा ऽत्रोभयत्रापि करणापाटवमन्दान्धकारादिदोषाभावे ऽपि पुरुषापराधादेव नृपनिष्ठसाक्षात्कारस्याबाधनिवर्तनाद्भ्रमत्वं तथा प्रकृते ऽपि बोध्यम् । १४ । २२० ।

चक्रमिति प्रासङ्गिकः । अस्योदाहरणं तु तत्त्वबुभुत्सुना केवलं श्रवणमेव न सेव्यं किं तु तदङ्गभूताः शमादयो मननादयश्च सेव्याः । एवं स्वर्गादिकामेन न केवलं

प्रधानकर्मैव सेव्यं किं तु तदङ्गजातमपीत्यादि बोध्यम्। १। २२१।

शमादेस्तत्त्वज्ञानस्य चान्योन्यसापेक्षत्वे किमपि न सिध्येदित्याशङ्कायां वन्हिधूमन्यायः। यथोत्पत्तिप्रतीतिरूपद्वारभेदाद्वह्निधूमयोरितरेतरापेक्षत्वं न विरुध्यते तथा स्वरूपलाभदार्ढ्यरूपद्वारभेदान्नात्रापि विरोधः। २।२२२।

नन्वेतावता ग्रन्थेन मननादिना पुरुषापराधापगमे प्रतिबन्धरहितेन तत्त्वसाक्षात्कारेण ज्ञानं बाध्यते इत्युक्तं भवति बाध्यबाधकभावश्च विरोधपूर्वक एव अतो ज्ञानाज्ञानयोर्विरोधः क इति निरूपणीयं येन बाध्यबाधकता स्यात्। स किं गोमहिषादिन्यायेन नैमित्तिकः। यथा गवादेर्महिषादेश्च केन चिन्निमित्तेनान्योन्यं मैत्री भवति केन चिच्च विरोधः। किं वा ऽहिनकुलन्यायेन शाश्वतिक इति चेच्छृणु। चैतन्यमेव ज्ञानमिति पक्षे रश्मितृणादिन्यायेनागन्तुकः। यथा ऽऽदित्यरश्मयः स्वभावतस्तृणादेर्भासका अपि सूर्यकान्तमण्यारूढास्तद्दाहका भवन्ति। तथा ऽज्ञानप्रकाशकमपि चैतन्यमखण्डाकारवृत्त्यारूढं तद्बाधकं भवतीति बोध्यम्। अखण्डाकारान्तःकरणवृत्तिर्ज्ञानमिति पक्षे तु तमःप्रकाशन्यायेनोपमर्द्योपमर्दकभावलक्षण इति। १४६। १२३।

तमःप्रकाशन्यायो ऽपि मुख्यो बोध्यः। १४७। २२४।

गोमहिषादिन्यायो ऽत्र प्रसङ्गव्याख्यातः। १। १२४।

अहिनकुलन्यायस्तु स्पष्टः। २। २२६।

सिंहमृगन्यायो ऽपीदृशः। ३ २२७।

प्रत्यक्षादिविरोधेनानुमानस्य बाधितत्वे गोमयपायसन्यायप्रवृत्तिः । यथा गोमयं पायसं गोविकारत्वात्संमतवदित्यस्य प्रत्यक्षबाधितत्वं न पयआदावनैकान्तिकत्वेन चाप्रमात्वं तथा ऽन्येष्वप्येतादृशेषु बोध्यम् । १४८ । २२८ ।

प्रत्यक्षविरोधेन तदितरसर्वबाध्यत्वे विवक्षिते उपजीव्योपजीवकयोरुपजीव्यप्राबल्यमिति न्यायः अयमन्यत्रापि सत्युपजीव्योपजीवकभावे प्रवर्त्तते । १४९ । २२९ ।

उपदेशानुपदेशत्वे विपरीतं बलाबलमिति न्यायो ऽस्य बाधकः । दृश्यते हि चन्द्रादावतिविपुलप्रमाणोपदेशेन प्रादेशप्रमाणग्राहिणः प्रत्यक्षस्य बाधः । दृश्यते च व्योम्नि शब्दैकविशेषगुणत्वोपदेशसहकृतेन नीलाद्यभावानुमानादिनोपजीव्यस्यापि नीलादिरूपप्रतियोगिप्रत्यक्षस्य बाधः । १५० । २३० ।

दामव्यालकटन्यायो न तव स्यात्कदा च न । भीमभासदृढन्यायात्त्वं यास्यति विशोकतामित्यादिना वासिष्ठइदं न्यायद्वयं सप्रपञ्चमुपन्यस्तम् । तत्राद्यस्योच्चतरां दशामापन्नस्याप्यज्ञस्यातिनीचदशाप्राप्तिरवश्यं कालेन भवतीति तत्त्वबोधो ऽवश्यं संपाद्य इति विवक्षायां प्रवृत्तिः । दामव्यलकटाख्यास्त्रयो ऽसुराः शम्बरेण स्वमायया निर्मितास्ते च तलप्रहारादिना मेर्वादिचूर्णीकरणे शक्ता अप्यज्ञानप्रभावात्कालेन मशकादियोनिं प्रापुरिति प्रसिद्धं तत्र । १५१ । २३१ ।

तत्त्वविन्न कदा ऽपि स्वपदात्पततीति विवक्षायां द्वितीयस्यावतारः । ते ऽप्यसुरास्तेनैव तथा निर्मिताश्चिरं जीवन्मुक्तिसुखमनुभूय निर्वाणपदं प्राप्ता इति संक्षेपः ।

प्रपञ्चस्तु तत्रैव द्रष्टव्यः । सुन्दोपसुन्ददामाद्याख्यानवद-न्यान्यप्याख्यानानि प्रायो न्यायतयोदाहर्त्तुं शक्यन्ते । एवं सर्वे लौकिका दृष्टान्ता लौकिक्यो गाथाश्च सर्वा न्याय-त्वेनोदाहर्तुं शक्यन्तेऽइत्यलमतिप्रपञ्चेन । १५२ । २३२ ।

व्याख्यातं न्यायवृन्दं निजमतिमनतिक्रम्य यावन्मयाऽऽप्तं पारं प्राप्तुं तु शक्तो न हि भवति गुरुः कः पुनर्मादृशो ना ॥ सर्वः सर्वं न वेत्ति प्रथितमिदमतो नास्ति मे ऽत्रापराधः शिष्टा ज्ञेयाः स्वयं वै सुविमलमतिभिः सम्यगाराधितार्यैः १।

अत्र प्रथमपादे यावत्तैलं तावद्व्याख्यानमिति न्याय-विषयत्वं बोध्यम् । १५३ । २३३ ।

यावत् स्नाता तावत्पुण्यमिति न्यायो ऽपीह बो-ध्यः । १५४ । २३४ ।

द्वितीये ऽनवबुद्धार्थे प्रवृत्तिर्बिलवर्त्तिगोधाविभज-नन्यायेनाशक्येति ध्वनितम् । १५५ । २३५ ।

यत्राधिकार्थालाभे ऽल्पार्थे प्रवृत्तिर्न दूषायेति वि-वक्षा तत्रालाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामितेति न्यायः मत्ताकाशिनी स्त्रीविशेषः । १५६ । २३६ ।

तृतीये न हि सर्वः सर्वं जानातीति न्यायो ऽर्थतः पठितः । १५७ । २३७ ।

न हि सर्वत्रानीशशक्तिरिति न्यायः । १५८ । २३८ ।

सर्वासाध्यान्निवृत्तिर्नापवादायेति न्यायश्चात्र ध्व-नितः १५९ । २३९ ।

पूर्वार्द्धन्यायाः १६ । २ । मिलिताः । ४० ।

वेदाभ्राम्नाय ४०४ संख्याकलौकिकन्यायसंग्रहः ।
शिवयोः प्रीतये ऽयं स्यात्पित्रोर्बालस्य गीरिव । २ ॥
गङ्गाम्भोमिलितस्य वीथिपयसः सत्सेव्यतां वीक्ष्य मे

चेतो याति मुदं ध्रुवं मम वचो मिश्रं वचोभिः सताम् ।
श्रुत्यादेर्वचनैश्च लब्धमिलनं याता सतां सेव्यतां
साफल्यं भविता ततो मम कृतेः स्वाभीष्टसंप्रापणात् । ३ ।
यो ब्रह्मा यश्च विष्णुर्वसुतनुरपि यो यश्च गौर्यादिमूर्त्ति-
र्यश्चात्मा सर्वजन्तोः श्रुतिशिखरगिरां यश्च तात्पर्यभूमिः ।
यस्याबोधात्समुत्थो व्रजति च विलयं यस्य बोधात्प्रपञ्च-
स्तं शुद्धं संप्रपद्ये शिवममरमजं शंभुमीशानमीड्यम् । ४ ॥

इति श्रीसाधुवृन्दवन्दितपादारविन्दवैराग्यादिरत्नाकरविद्वद्वरश्रीमद्रामदयालुशिष्येण सोमवंशीयबिन्दरायकुलोत्तंसभगवत्परायणश्रीसेवादेव्याश्रितपादारविन्दश्रीगुलाबरायवर्मात्मजेनोदासीनावस्थेन रघुनाथवर्मणा विरचितो लौकिकन्यायसंग्रहः समाप्तः ॥

